# साहित्यसन्दर्भः

प्रणेता सम्पादकश्च
शिवजी उपाध्यायः
प्राध्यापकः
साहित्यसंस्कृतिसंकाये
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

# साहित्यसन्दर्भः

( स्वोपज्ञकारिकावृत्तिनिबद्धः साहित्यशास्त्रस्य वेदान्त-
मीमांसाविषयोपश्लिष्टस्य विचारात्मकः सन्दर्भग्रन्थः )

प्रणेता

**शिवजी उपाध्यायः**

प्राध्यापकः साहित्यसंस्कृतिसंकाये
वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

विक्रमसंवत् २०४७
कार्तिकशुक्लपूर्णिमा
दिनाङ्कः—२।११।१९९० ई०

# ŚAHITYA ŚANDARBHAH

( A DELIVERATIVE WORK ON THE ŚAHITYA
ŚAŚTRA AND MIMAŚA-VEDANT-THOUGHTŚ )

BY

**SHIVJI UPADHYAYA**

Deptt of Sathitya

Sumpurnanand Sanskrit University

Varanasi.

September—2-11-1990

# भूमिका

'साहित्यसङ्गीतकलाविहीनस्साक्षात्पशुः पुच्छविषाणहीनः' इति चिरन्तनी लोकोक्तिः। तत्र स्वर-लय-तालादिसमन्वितं सङ्गीतं भवति। इदञ्च प्राणिमात्रसाधारणम्। तत्र स्वरविहीनः कोऽपि प्राणी न प्रजायते। स्वरेषु यथायथं उच्चारितेषु ताल लयादिकं स्वत एव सिद्धयति। विद्यारम्भे बालानां स्वरा एव प्रथमं शिक्ष्यन्ते। सङ्गीतारम्भे 'सरिगमपधनि' इति स्वरेषु शिक्षितेषु तदनन्तरमेव सङ्गीतशास्त्रशिक्षणमिति क्रमं विलोकयामः। एवञ्च स्वभावसिद्धैः शिक्षणसिद्धैश्च स्वरैः सर्व एव मानवाः परिचिता भवन्ति। पशुषु स्वभावसिद्धा एव स्वराः सन्ति, किन्तु शुका वानराश्च शिक्ष्यन्ते। शिक्षितानां शुकानां ध्वनयो मानवोच्चारणजनितध्वनय इव श्रूयन्ते किन्त्वव्यक्तमधुरा एव ते। वानरास्तु विगतवाकाराणां नराणां व्यापारानुकरणं कर्तुं शिक्षया प्रभवन्ति। तथा च कियताप्यंशेन प्राणिनः सङ्गीतकलाभिज्ञा विलोक्यन्ते।

साहित्यकलायां विविच्यमानायां मानवमात्रे कियताप्यंशेन स्वभावसिद्धां शिक्षयाऽवाप्तां च साहित्यकलामनुभवामः। सहितशब्दात् ष्यञ् प्रत्यये कृते साहित्यमिति निष्पद्यते। हितेन सह वर्तत इति सहितमिति सहितशब्दस्य व्युत्पत्तिः सर्वस्य हितं वस्तु परमार्थतया आत्मैव। कनक-रजत-कामिन्यादयोऽपि हिता भवेयुः। किन्तु।

> "वस्तुनस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
> कामिनीकनकेभ्योऽपि न हितं शान्तचेतसाम्"॥

इति न्यायेन कामिनीकनकादीनां क्वचिद्धितत्वं न विलोकयामः। आत्मनो हितत्वे न कस्यचिदपि व्यभिचारमनुभवामः। यद्यप्यवैदिकानां नये।

अहमेव न किञ्चिच्चेद्दुःखं कस्य भविष्यति'

इति वदन्त आत्मानं निषेधन्ति ते, तथापि इमामुक्तिं को वदतीति प्रश्ने कृते अहं वदमीति तेनोत्तरितव्यं भवति। तत्राहं पदार्थः क इति प्रश्ने वागादिकं निर्दिशेत्। तच्च वागादिकं कस्येति प्रश्ने, न कस्यचनेति वा ब्रूयात्, मम वागिति वा वदेत्। न कस्यचनेति पक्षे तद्वाचि अविश्वासः, ममेति पक्षे च वागद्यतिरिक्त आत्मा सिद्धयति। 'अहमेव नास्मि किं मम' इति वदतामवैदिकानां पार्यन्तिकं तात्पर्यं वैषयिकेषु पदार्थेषु वैराग्यातिशयद्योतकमित्युन्नेयं भवति। साधुरयं पन्थाः—असम्भवः अहङ्कारो ममकारश्च त्यक्तव्य एव। एतादृशी पारमार्थिकी स्थितिः समीचीनैव। किन्तु व्यावहारिक्याः स्थितेरप्युपपत्तौ यत्नः कर्तव्यः तत्राहंशब्दप्रयोगः उयुक्तस्य तस्यार्थावधारणेन विना न सङ्गतो भवेदित्यत्र कश्चन कविरेवं कवयति—

**त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते नासौ ।**
**कर्तव्यो ममकारः किन्तु स सर्वत्र कर्तव्यः ।। इति ।**

सत्यमहङ्कारो ममकारश्च वैराग्यातिशयविघ्नकरौ, तदर्थम् अहं शब्दवाच्यस्यैव विलयस्वीकारः मत्कुणदंशव्यथया गृहदाह इव स्यात् । शय्यायां मत्कुणानां दंशो भवतीति न हि कश्चन गृहानेव दहेत् प्रेक्षावान् । तादृशोऽहंशब्दस्सर्वत्र प्रयुज्यताम् । तेनैव ममकारः स्वयमपसृतो भवति इति वैदिका मन्यन्ते । अस्तु यथा तथा वा ।

अहंशब्द आत्मानं निर्दिशति, स चात्मा सर्वस्यापि हितः कल्याणकरः । हितेन तेनात्मना सह वर्तत इति सहितं शरीरम् । तस्य भावस्साहित्यमिति साहित्यशब्दनिष्पत्तिः । तत्र 'अ' कार प्रभृति 'ह' कारपर्यन्तं विद्यमानेष्वक्षरेषु अहयोर्मेलनेन प्रातिपदिकं निष्पाद्य तदुपरि सु प्रत्यययोगेनाहमिति निष्पन्ने प्रत्याहारवदवगत्याहं शब्दोऽकारादिवर्णसमुदायवाचकोऽवगम्यताम्, अथवा शरीरम् इन्द्रियाणि वा तद्वाच्यानीति स्वीक्रियताम्, किं वा शरीरेन्द्रियबन्ध्यहङ्कारादिभ्यो भिन्नः कश्चन तद्वाच्य इति वा निश्चीयताम् । सर्वोऽपि मानवोऽहंशब्देन परिचितः तद्वाच्यश्च सर्वेषां प्रिय इत्यत्र नास्ति विशयलेशः । वैदिको भवत्ववैदिको वा सर्वस्य प्रियतम आत्मा । स शरीराद्यतिक्त इष्यताम् शरीरादिर्वा इष्यताम् । तदस्य निरूपणाय वैदिका अवैदिकाश्च यथा प्रवृत्ताः तथैव साहित्यिका आलङ्कारिकाश्च प्रवृत्ताः । यथा वैदिकाश्शास्त्रकाराः अस्मिन्विषये सञ्जातविप्रतिपत्तीनां मतान्यनूद्य दूरीकुर्वन्ति, तथैव साहित्यशास्त्रकारा अपि काव्यस्यात्मा कः ? शरीरं किम् ? इन्द्रियस्थानापन्नानि कानि ? इत्यादिषु सञ्जाता विप्रतिपत्तीर्दूरीकृत्य याथातथ्येन तत्स्वरूपं प्रदर्शयन्ति । यथा वा मानवा आत्मानं जानन्तोऽपि व्यवहारे भ्रान्ता दृश्यन्ते तथैव साहित्येऽपि ।

तदस्य भ्रमस्य दूरीकरणाय साहित्यिका चन्द्रालोकप्रतापरुद्रीय-साहित्यदर्पण-ध्वन्यालोक-काव्यप्रकाशादिग्रन्थनिर्मातारो ग्रन्थान् प्राणैषुः । चिरन्तनादेव कालाद्दार्शनिकसाहित्यिकग्रन्थप्रणेतृष्विमां रीतिमवलोकयामः—संक्षिप्तस्य विषयस्य विस्तरेण निरूपणम् विस्तृतस्य विषयस्य संक्षेपेण प्रतिपादनम् इति । मीमांसाभाष्यकृतः श्रीशबरस्वामिनः प्राचीनं पद्यमुद्धृत्य जैमिनिसूत्रेष्वेव रीतिमिमां प्रदर्शयन्ति—

अतिदेशाध्यायगतोऽयं सन्दर्भः—सप्तमाष्टमाध्याययोस्सङ्गतिप्रदर्शनावसरे शबरस्वामिनो लिखन्ति—'तदेतत् संक्षेपेणैव पूर्वमुक्तम् ।

**विस्तीर्य हि महज्जालमृषिः संक्षिप्य चाब्रवीत् ।**
**इष्टं हि विदुषां लोके समासव्यासधारणम् ।। इति ।**

एवं संक्षेपेण विशदतया च ग्रन्थप्रणयनपद्धतिश्चिरादेव प्रवृत्ता । विषयान् गद्यपद्यानि च धारयितुं यस्य यादृशी शक्तिः स तथा करोत्विति ग्रन्थप्रणेतॄणां प्रवृत्तिः ।

तामिमां सरणिमवलम्ब्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयसाहित्यविभागे वरिष्ठ-व्याख्यातृपदमधितिष्ठता पण्डितशिवजी उपाध्येन 'साहित्यसन्दर्भ' नामा अत्युत्तमो-ग्रन्थः प्रणीतः पद्यात्मना स्वोपज्ञकारिकावृत्तिसहितः ।

तत्र सर्वप्रथमं शृङ्गग्राहितया रसं परिगृह्य रसतत्त्वविमर्शः कृतः । यथाऽऽत्मनि विप्रतिपन्ना दार्शनिकाः तथैव काव्यपुरुषस्याऽऽत्मस्थानापन्ने रसतत्त्वे साहित्यिका विप्रतिपन्नाः । आत्मास्तित्वे स्थिरीकृते तदुपरि तदधिष्ठानं शरीरम् ज्ञानसाधनानीन्द्रि-याणि कर्मसाधनानि तानि आत्मगुणाः शरीरेन्द्रियगुणा इत्येवमादयः प्रसाधयितुं शक्यन्ते तथैव साहित्यिका अपि स्वीयेषु ग्रन्थेषु विवेचितवन्तः । तत्रैकस्य पन्थानमपरो नानु-सरति इति स्थितौ सत्यां विमर्शेन विना विषया हृदयङ्गमा न भवेयुरित्युपाध्याय-महोदयस्साधु विमृश्य पदार्थान् प्रतिपादयति । वृषभस्य शृङ्गे गृहीते एव स वशीभवति, पुच्छे गृह्यमाणेऽस्मानप्याकृष्येतस्ततः पलायनं कुर्यात् । अत्रैवं द्रष्टव्यम्—गोपालं वत्सं सम्बोध्य 'हे वत्स गोपाल त्वं क्वासि' इति पृष्टे स दूरे वर्तमानः 'एषोऽस्मीत्युच्चारयन् हृदयं स्पृष्ट्वा प्रदर्शयति, न नेत्रं श्रोत्रं मस्तकं वा स्पृशन् प्रदर्शयति । बालोऽपि जानाति-हृदयेऽहमस्मीति । हृदयं कमलरूपेण वर्णयति वेदोऽपि – 'पद्मकोशप्रतीकाशं हृदयञ्चाप्य-धोमुखम् । कमलकोशा ऊर्ध्वमुखा भवन्ति ऊर्ध्वमुखा एव विकसन्ति, परं हृदयकमलं कोशरूपम् अधोमुखञ्च । योगिनो महात्मानः स्वीययोगकलया पद्मकोशमुद्घाट्य ततः स्पन्दमानं पुष्परसमास्वादयन्तस्तत्र निवसन्तं गोविन्दं परमात्मतत्त्वं साक्षात्कुर्वन्ति । गोविन्दस्तत्र स्वीयवासभूमिं कुतः कल्पयामास ? कमला स्वीयालये निवसति तत्रैव कमलापतिरपि स्वीयं वासं कल्पयामासेत्यत्र किमाश्चर्यम् । एतदेव न, कमला गोपीजन-वत्सलं गोपीजनलोलुपं पतिं जागरूका सती निरीक्षितुं पत्युर्वक्षःस्थल एव वासं परि-कल्प्य सदा निवसति क्वचिदितस्ततो निस्सरति न वेति । योगिनस्तु अन्तरेव स्वीयं कार्यं साधयन्ति । अतः परमात्मतत्त्वं योगिहृद्ध्यानैकगम्यमलौकिकम् । तथैव रसतत्त्व-मपि सहृदयहृद्गतभावनैकगम्यम् । सहृदया हृदयवन्तो भवन्ति यतस्ते सहृदयाः—हृदय-सहिताः । हृदयसहितत्वञ्च मातुस्स्तन्यपानेन । ये धात्र्यादीनां स्तन्यं पिबन्ति ते हृदय-सहिता न भवन्ति । सहृदयहृद्गता भावनाऽलौकिकी भवति, तद्गम्यो रसोऽप्यलौकिकः एवञ्च काव्ये रसस्यैव प्राधान्यमिति तस्य प्रथमं निरूपणं श्रीउपाध्यायमहोदयो मन्यते ।

काव्ये प्रधानं किमित्यत्रैव लोका विप्रतिपन्नाः । रस इति अलंकार इति, वक्रो-क्तिरिति गुणा इति पदसंघटनेति नैकविधा विप्रतिपत्तयः । कथमस्य निर्णयो भवतु विना प्रबलेन प्रमाणेन न्यायेन वा । तदर्थमयं मीमांसान्यायः प्रदर्श्यते यत्फलवत्तत्प्रधान-मिति साधारणो नियमः । 'फलवत्सन्निधावफलं तदङ्गमि' ति न्यायः । फलञ्च क्वचि-

च्छ्रूयमाणम् क्वचिच्चाश्रूयमाणम्। अनेनेदं फलं निष्पद्यत इति श्रूयमाणस्थले तस्य फलवत्त्वे न सन्देहः यत्र च फलं न श्रूयते तत्र विश्वजिन्नयायेन तस्य फलवत्त्वमाश्रीयते। यथा श्रूयमाणं स्थलं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, अश्रूयमाणं स्थलञ्च 'विश्वजिता यजेत' इति। तथैव 'काव्यं सद्यः परनिर्वृतये' इति मम्मटभट्टीये विधिवाक्ये (अधिकारवाक्ये) विलोक्यमाने परां निर्वृतिमुद्दिश्य काव्यरचनां मम्मटाचार्यो विदधातीति स्फुटं प्रतीयते। परा निर्वृतिश्च रसचर्वणया जायत इति प्रसिद्धमेव। तदिह न सर्वसाधारणम्, किन्तु सहृदयहृदयैकवेद्यमित्यलौकिकमेष्टव्यम्। अन्ये च ये गुणालङ्कारादयः काव्ये सन्ति ते रसस्याङ्गभावमाप्नुवन्ति। यथा दर्शपूर्णमासयोः फलवत्त्वे सिद्धे प्रयाजादयोऽङ्गभावमाप्नुवन्ति तथैव रसस्य परनिर्वृतिरूपफलजनकत्वे सिद्धे गुणालङ्कारादीनां तदङ्गत्वं सिध्यति। 'काव्यं सद्यः परनिर्वृतये' कुर्यात्' इति विधिवाक्याकारे जाते आख्यातवाच्यभावनायाः साध्यसाधनेतिकर्तव्यताकांक्षायां सत्यां चतुर्थ्यन्तपदबोधितपरनिर्वृतेस्साध्यत्वेन साधनाकांक्षायां काव्यरचनायां साधनत्वेनान्वयः इतिकर्तव्यतापूरकं तदेव भवति यत् प्रकृतसाधनस्योपकारकं स्यात्। तथोपकारकपदार्थः को वाऽस्तीति विचार्यमाणे माधुर्यादिगुणानाम् उपमादीनामलङ्काराणाम् अन्येषाञ्च काव्यशोभाविवर्द्धकानां काव्यलक्षणविधायिभिराम्नानात् तेषामितिकर्तव्यतात्वेनान्वयः। परानिर्वृतिसाध्यका रचनाकरणिका गुणालङ्काररीतिकर्तव्यताका भावना इति मम्मटाचार्यविधिवाक्यस्य परनिर्वृतये काव्यं रचयेत् इत्यस्य बोधस्सम्पद्यते। माधुर्यादिगुणानाम् उपमाद्यलङ्काराणाञ्च निर्देशकवाक्येषु प्रयाजादिवाक्यष्वेव फलाश्रवणात् फलाकांक्षायां प्रधानस्य चोपकारकाकांक्षायां नष्टाश्वदग्धरथन्यायेनोभयेषां सम्प्रयोगोऽङ्गाङ्गिभावे सिध्यति। न च गुणालंङ्कारविधायकवाक्येषु फलाकांक्षायां स्वतन्त्रं फलमेव कल्प्यताम् विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा, किमित्युपकारकत्वकल्पनेनाङ्गभाव आश्रीयत इति वाच्यम्। केवलं गुणानामलङ्काराणाञ्च योजनेन सहृदयमनः प्रीतेरभावात्। किञ्च माधुर्यादयो गुणा रसाव्यभिचरितसम्बन्धाः यथा प्रयाजादयो दर्शपूर्णमाससम्बद्धाः। न हि कोऽपि दर्शपूर्णमासौ विहाय केवलप्रयाजानुष्ठानेन स्वर्गं प्राप्तुं शक्नोति, तथैव माधुर्यादयो गुणाः। न हि रसमपहाय माधुर्यमेवास्वाद्य सहृदयो दृश्यते। अतोऽङ्गाङ्गिभाव एवैष्टव्यः। यद्यपि क्वचित् प्रकरणपठितानां इष्टिपशुसोमानां समं प्राधान्यं स्वीकृत्य राजसूये स्वाराज्यफलार्थत्वमङ्गाङ्गिभावेन विनाऽङ्गीकृतम्। तथापि तत्र राजसूयपदवाच्यक्रतूनां निर्णयाभावात् इष्टिपशुसोमानां तुल्यं प्राधान्यं स्वीकर्तव्यमापतितम्। दर्शपूर्णमासयोस्तु न तथा, आग्नेयाद्युत्पत्तिवाक्येषु अमावास्याशब्दस्य पौर्णमासीशब्दस्य वा सत्त्वात्, तदितरेषु प्रयाजादिषु तदभावात् दर्शपूर्णमासशब्दः षट्सु यागेषु प्रसिद्ध इत्यङ्गीकृत्याङ्गाङ्गिभाव आश्रितः। काव्यमित्याबालगोपालं प्रसिद्धम् दर्शपूर्णमासपदवत्। काव्यशब्दव्यवहारः

शब्दार्थयोरुभयोः कैश्चन स्वीकृतः, कैश्चन शब्दमात्रे। सर्वथा काव्यशब्दः प्रसिद्धः। प्रसिद्धत्वाद् गुणालङ्कारादीनामङ्गत्वे न कापि क्षतिः। यद्यपि कवेः कर्म काव्यम् इति काव्यशब्दः कविसापेक्षः, एवं काव्यस्य कर्ता कविरिति कविशब्दः काव्यसापेक्षः प्रतिभाति, यथापि अवेष्ट्यधिकरणन्यायेन यथा राजशब्दः प्रसिध्या क्षत्रियवाचकः स्वीकृतः तथैव काव्यशब्दस्यापि प्रसिद्धिमादायार्थनिर्णयो भवत्येव। कोऽर्थो निर्णीयतामिति चेत्– काव्यमित्यस्य 'साहित्यमित्यर्थो भवितुमर्हति। कस्यापि रागस्य भैरवी कल्याणीत्यादेः द्वेधा गानं भवति—आलापेन रागस्य गानम्, साहित्यमाधारीकृत्य काव्यमिति। तत्राधारीभूतं साहित्यं गद्यरूपं वा भवेत् पद्यरूपं वा। वेदेषु साम्नां गीतीनां गानं ऋचमाधारीकृत्य भवति। तत्र ऋगेव साहित्यम्। गुणालङ्कारैस्सहितं यत् तदेव साहित्यमेव काव्यम्। यथा गोत्वधर्मः गवां समूहेऽपि तिष्ठति एकैकस्यां व्यक्तावपि तिष्ठति यथा वा द्रव्यधर्मः पृथिव्यादिनवसु तिष्ठति एकैकस्यां पृथिव्यामपि तिष्ठति, तथैव काव्यत्वधर्मः समुदिते ग्रन्थे प्रबन्धे च तिष्ठति, तथा एकैकस्मिन् पद्ये गद्यवाक्येऽपि तिष्ठति। एवञ्च काव्यं साहित्यमिति समानार्थकं सिद्धम्। अत एव काव्यमधीयानं 'त्वं किं पठसि' इति पृष्टे स उत्तरयति —साहित्यमधीयानोऽस्मि इति। साहित्यदर्पणे काव्यप्रकाशे च प्रतिपाद्यो विषयः प्राय एकरूप एव, तथापि नामभेदः प्रतिपादकग्रन्थयोरेकरूपत्वं प्रतिपादयति। अतोऽपि काव्यसाहित्यशब्दयोस्समार्थकत्वमभ्युपगन्तव्यं भवति।

काव्यलक्षणविधायिनां लक्ष्याणि काव्यानि। काव्यलक्षणग्रन्थेष्वनेके विषयाः। तेषां साहित्यं यदा काव्येषु भवेत् तदैव लक्षणानां लक्ष्याणि काव्यानि भवेयुः। ये पूर्वे कवयः भासकालिदासादयः तेषां काव्यगतसन्दर्भान् अवगत्यैव लक्षणग्रन्थाः प्रवृत्ताः। लक्षणग्रन्थान् वीक्ष्य भासकालिदासादयः काव्यानि निबबन्धुः इति साधनं दुष्करम्। लक्ष्यैकचक्षुषो भवन्ति लक्षणग्रन्थनिर्मातारः लक्षणग्रन्थान् सविधे निक्षिप्य ग्रन्थपत्राणि परिवर्तमानाः कवयः काव्यानि यदि प्रणीतवन्तस्स्युस्तर्हि पाकशास्त्रं सविधे निक्षिप्य तद्वीक्ष्य पाचकाः पाकं कुर्वाणा इव उपहसनीयाः कवयो भवेयुः अतस्सर्वप्रथमं साहित्यं काव्यमुत्पन्नं तदनु लक्षणग्रन्था निरमीयन्तेति स्वीकारे काव्यं सुप्रसिद्धमिति सिध्यति।

श्रव्यं भवतु काव्यं दृश्यं वा, कविः स्वीये काव्ये प्रधानरूपेण कञ्चन रसं स्वीकृत्य तदनुकूलान् गुणान् अलङ्कारान् रसानुकूलां वृत्तिं पदसङ्घटनाञ्च विन्यस्य यथा वा रसधारा आदौ मध्येऽन्ते च निराबाधा प्रवहेत्तथा यतेत। तदर्थं प्रकृतरसस्य विरोधी रसो गुणो वा इत्यवगत्य तद्विन्यासस्यावश्यकत्वे कियती मात्रा, आलम्बनश्च क इति पर्यवेक्ष्य तं रसं विन्यसेत् येन प्रकृतरसधाराया उपरोधो न स्यात्। एवमादयस्सूक्ष्मातिसूक्ष्मास्सन्दर्भास्साहित्ये विद्यन्ते। ते चेतस्ततो ग्रन्थेषु विप्रकीर्णाः गद्यमयाः पद्यमयाश्च सन्ति। तान् सङ्कलय्य स्वमतेन स्वानुरूपमभिनवीकृत्य च पं० शिवजी उपाध्यायः

सरलसरलाभिः कारिकाभिरस्मिन् स्वीये साहित्यसन्दर्भाभिधे ग्रन्थे प्रदर्शितवानिति नितरां प्रसीदामि। लक्षणग्रन्थेषु स्वाधीनपतिकायाः स्वाधीनभर्तृकाया नायिकाया उल्लेख उपलक्ष्यते किन्तु स्वाधीनपत्नीकस्य स्वाधीननार्यस्योल्लेखो नोपलभ्यते, परन्तु पं० शिवजी उपाध्यायः स्वाधीनकविताकलावनिताक इत्युल्लिखितुं शक्यते। यथा-ऽयं वाञ्छति तथा कविताकलावनितां नाटयति। साहित्यसन्दर्भाध्ययनेन छात्राः विबुधाश्च लाभान्विता भवेयुरिति विश्वसिमि। एतादृशानपरानपि ग्रन्थान् प्रणीय पं० शिवजी उपाध्यायो महतीं प्रतिष्ठां लभतामिति तमाशिषा वर्द्धयामि।

वाराणसी
आश्विनमातृनवमी
वि० सं० २०४७
(दिनाङ्क–१३।९।१९९०)

पद्मभूषणपट्टाभिरामशास्त्री
४/७ हनुमानघाट
वाराणसी

# शुभाशंसा

आयुष्मता श्रीशिवजीउपाध्यायविदुषा रचितो ग्रन्थः 'साहित्यसन्दर्भाख्यः' कश्चन नूतनः शास्त्रचिन्तनोपक्रम इति महते परितोषाय। अस्माद् ग्रन्थात्सौन्दर्य-विमर्शाख्योंशो मया संस्कृतप्रतिभायां पूर्वं प्रकाशितः। तदानीमेव प्रणेतुर्वाग्वैभवं सम्परीक्षितम्। शास्त्राण्यधीत्य यदा नूतना काचन सरणिर्निर्मीयते तदा तलस्पर्शिनः पाण्डित्यस्य निकषे कषणं हैमं गुणं प्रकटीकरोति। नूतनस्य कृत्यवर्त्मनः सदुपन्यास एव निकषः। साहित्यशास्त्रस्य ग्रन्थीनां श्लथनमपि स्थाने स्थाने कृतमत्र द्रष्टुं शक्यते। अन्येभ्यः शास्त्रेभ्यो योगादिभ्यः सम्बद्धान् विषयानुपस्थाप्य निगूढाः सन्दर्भा उन्मीलिताः।

ग्रन्थः स्वोपज्ञवृत्तिसहितकारिकाभिराबद्धः। कारिकाणां भाषा सुपरिच्छिन्ना परिस्फुटा संहता च।

अनया महत्या कृत्या संस्कृतशास्त्राणां परम्परा परिस्पन्दमाना पुर आनीयत इति मोदोऽनुभूयते।

साहित्यशास्त्रं न केवलं लक्ष्यलक्षणसमन्वयात्मकं किञ्चनानुशीलनमेव, एतत्तु परिस्पन्दानन्दसन्दोहानुभवस्य मूर्तं परिकल्पनमपि। अत एव तावदेव यावदेतच्छोभते तत्परिशीलनं परिष्कृतामभिरुचिं वितनोति, रसपेशलां भाषां च समुल्लासयति। साहित्यसन्दर्भेऽस्मिन्नुभावपि गुणौ परस्परं स्पर्धितया वर्तेते। आयुष्मन्तं श्रीमदुपाध्यायं भूयो भूयः स्नेहाशिषाऽभिषिञ्चामि, एवमेवायं नवसर्जनाभिमुखो नूनमुत्तरोत्तरं भवेदिति शम्।

**विद्यानिवासमिश्रः**
कुलपतिः
वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

आश्विनशुक्लद्वादशी,
विक्रमसंवत्–२०४७

# स्वीयम्

अथायं 'साहित्यसन्दर्भः' प्रकाशमुपैति, साहित्यशास्त्रे केचन रसादिसन्दर्भाः प्राधान्येन ग्रन्थेऽस्मिन् स्वोपज्ञकारिकावृत्तिविनिबद्धा यथाप्रतिभानं निरूपिताः सन्ति। सर्वेषां शास्त्राणां चरमा परमा चोपलब्धिर्मोक्षाख्यः पुरुषार्थः, स च साहित्यशास्त्रस्याप्यभिलषणीयः स्पृहणीयश्च। वेदान्तशास्त्रोपदिष्टमोक्षस्तत्साधनञ्चेति द्वयं साहित्येनाविरुद्धमिति सोऽपि विषयोऽत्र संश्लिष्टदिशा विमृष्टः सुधियां समावर्जनाय। किञ्च मीमांसायामितिकर्तव्यताविचारो भावनानुकूलक्रियार्थकत्वात्साहित्यशास्त्रानुरोधीति तद्विमर्शोऽप्यत्र प्रस्तुतः। अलङ्कारगुणदोषरीतिवृत्तिप्रभृतयस्तत्तल्लक्षणग्रन्थेषूपनिबद्धा विषया यद्यप्यत्रानन्तर्गतास्तथापि 'काव्यस्यात्मा रस' इति सिद्धान्तात्तेषामङ्गतया तदङ्गिनि रसतत्त्वे निरूपिते तत्र ते पर्यवस्यन्तीति पृथङ्नोक्ताः, सत्यवसरे तेऽपि निरूपयिष्यन्ते। यथाऽत्र स्वोपज्ञाः कारिका वृत्तयश्च तथैव विषयाणां विमर्शोऽपि स्वोपज्ञतया स्वातन्त्र्येण गतानुगतिकां स्थितिमतिरिच्य प्रास्थानिकसिद्धान्तमनुसृत्य च प्रज्ञानभासोपदर्शितः। सहृदयविदुषां दृष्ट्याकर्षणाय स एष 'सन्दर्भः, कियान् प्रभूष्णुर्भवेदिति तत्र त एव प्रमाणम्।

ममानन्यसम्मान्यासामान्यविद्वदग्रेसरा गुरवः पद्मभूषणविद्यासागरमहामहोपाध्यायादिविरुदभाजः पं० पी० एन० पट्टाभिरामशास्त्रिणोऽस्य ग्रन्थस्य विशदां भूमिकां विलिख्य सग्रन्थास्मद्गौरवं समेधितवन्त इति तेभ्यः सप्रणतिकार्तज्ञ्यमाविष्करोमि।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतयो विश्रुतयशोवैदुष्यदाक्षिण्यप्रीतिस्निग्धश्रियः सुधियः श्री ( डॉ० ) विद्यानिवासमिश्रमहेच्छाः शुभाशंसया ग्रन्थमिमं व्यभूषयन्निति तेषामाधमर्ण्यं नतेन मूर्ध्ना निर्वहामि।

किञ्चास्यैव विश्वविद्यालयस्य प्रकाशनाधिकारिणो ममाभिन्नसुहृदो डॉ० हरिश्चन्द्रमणित्रिपाठिनो नितरामनुस्मराम्यभिनन्दामि च यदीयैकमात्रप्रयत्नेन साहित्यसन्दर्भोऽयं प्रकाशपथमध्यागतः।

अन्येऽपि ममाखिलाः शुभैषिणो मित्राण्यन्तेवसन्तः परामर्शकाश्च सौहार्द-साधुवादार्हा यैरहमनुप्राणितोऽस्मि। ग्रन्थस्यास्य सावधिकं मुद्रणं कृतवते मुद्रकाय श्रीगिरीशचन्द्राय साशीःसाधुवादमुपहरामि।

अन्ते च—

नूत्नं किमेतत्? किमु तत्त्वमत्र?
का वैदुषी? का च विधेयदृष्टिः?
यावन्न सूक्ष्मेक्षिकया समीक्ष्य,
परीक्ष्यते तावदलक्षितं स्यात्॥

विश्वविद्यालयीयावासः
विक्रमसंवत् २०४७
कार्तिकशुक्लपूर्णिमा
दिनाङ्क २-११-१९९० ई०

सुहृद्विद्वद्वशम्वदः
**शिवजी उपाध्यायः**

## विषयानुक्रमः





# रसतत्त्व-विमर्शः

शब्दार्थरूपवदलङ्कृतिरीतिवृत्ति-
निर्दुष्टजुष्टगुणसङ्घटनैर्विभाव्यम् ।
श्रव्यं च दृश्यमुभयं कमनीयकाव्यं
येनात्मनोल्लसति तं रसमानतोऽस्मि ॥ १ ॥

आनन्दनिस्यन्दममन्दभाव-
स्पन्दायमानान्तरुदीयमानम् ।
काव्यात्मभूतं रसतत्त्वमेतत्,
संक्षिप्तवाचैव विवेचयामि ॥ २ ॥

स्वोपज्ञकारिकावृत्तिविमर्शोऽयं विदां मुदे ।
सुहृदामुदियाद् हृद्ये हृदये सदये सदा ॥ ३ ॥

❀❀❀

अथ कोऽयं रसः ? किञ्चास्वादात्मकं तत्तत्त्वमिति विमृश्यते—

रसनास्वादनाह्लादानन्दनिर्वृतिभावनाः ।
यत्परा यत्स्वरूपाश्च स रसो भावकाश्रितः ॥ १ ॥

रसनेति । रसनं रस्यमानवृत्तिविषयीकृतम् तद्रूपतया ग्राह्यम्, आस्वादनमास्वाद्यमानताविशिष्टं तदात्मकं वा । आह्लादनमासमन्ताद् ह्लाद्यमानस्वरूपम् । आनन्दरूपः सुखजनकस्तदात्मा चेति । निर्वृतिर्निर्वर्तनं निर्मुक्तपरात्मभावपर्याप्तिर्निरतिशयस्वभावावाप्तिश्च । भावना भाव्यमाना वृत्तिः पुनः पुनरनुसन्धानात्मिका । यत्परा यस्योद्दिष्टस्य रसस्य पराः परतयोपात्ता यस्मिन् निष्ठा यदन्तर्भूता भाविता वा, यत्स्वरूपाश्च यदाकारा यस्य स्वरूपतया पर्यवस्थिता जायन्ते—सचेतसां चेतोनिचिता अनुभूयन्ते वा । भावकाश्रितो भावयतीति भावनाविषयीकरोतीति वा भावभावनानुबन्धी भावकः सहृदयस्तदाश्रितस्तमाश्रित्य तेनाश्रितो वा, इत्याश्रयाश्रयिभावभावितःसहृदयहृदन्तर्निष्ठो रसः, रस्यत इति रत्यादिस्थाय्यभिव्यक्तः स सुप्रसिद्धः सन्नुच्यते ।

**विभावैरनुभावैश्च तथा सञ्चारिभिः क्रमात् ।**
**काव्ये तद्व्यक्तिराख्याता दृश्यश्रव्यात्मके पुनः ॥ २ ॥**

विभावैरिति । विभाव्यन्ते विशिष्टभावनाविषयीक्रियन्ते रत्यादयः स्थायिन एभिरिति विभावा आलम्बनोद्दीपनरूपा विभाव्यमानतया सचेतसां चेतःसु चानुभूयमानास्तैः, अनु पश्चाद् भाव्यमानाः कार्यतया प्रतीयमाना विभावानुबन्धिक्रियारूपा अनुभावास्तैः, तथा तद्वद् विभावानुभाववत्प्रकारानुरूपाः सम्यक् स्वानुकूलं चरन्ति उद्गच्छन्तीति सञ्चारिणस्तैश्च क्रमात् विभावानुभावसञ्चारिदर्शितक्रमानुरोधात् न तूत्क्रमेण न वाऽक्रमेण प्रत्युतैकैकप्रतीत्यनन्तरप्रतीतिपथानुगतेन विधिना दृश्यश्रव्यात्मके द्रष्टुमक्षिविषयीकर्तुं योग्यं दृश्यम्, श्रोतुं श्रुतिगोचरीकर्तुमर्हं श्रव्यम्, तदात्मके दर्शनश्रवणोपयुक्तः आत्मा यस्य तस्मिन् दृश्यरूपे श्रव्यरूपे च द्विविधे काव्ये कविकर्मत्वावच्छिन्ने वर्णनाप्रधाने पुनर्भूयस्तद्व्यक्तिस्तस्य रसस्य व्यक्तिर्व्यञ्जनं व्यञ्जनया वृत्त्या निष्पत्तिः प्रतीतिर्वा आख्यातोक्ता प्रतिपादिता रसतत्त्वविद्भिरिति शेषः । तत्र क्रमो विभावादिभिः सहसम्बन्धद्योतनार्थम् । पुनरिति भूयस्त्वे । तथेति–प्रकारप्रत्यायकम्, तत्पदेन पूर्वोक्तरसोऽनुकृष्यते ।

**समूहालम्बनास्वादो वस्तुतो रसवस्तुनः ।**
**तेन तस्य पृथग्भावो विभावादौ न युज्यते ॥ ३ ॥**

समूहेति । समूह्य विभावाद्याकलनेन सम्प्रतिपत्य सञ्चित्य चोद्दिश्यमानः समूहस्तदालम्बनेनाश्रयेणास्वादो रसनमास्वादनं वा वस्तुतस्तत्त्वतः परमार्थतो वा रसवस्तुनो रसात्मनो वस्तुनः पदार्थस्य रसतत्त्वस्य वा भवतीति शेषः । विभावानुभावसञ्चारिभिः सह रत्यादिस्थायिनां सम्भूय समूहतया समालम्ब्यास्वादो भवति प्रमातृणां सचेतसां न त्वेकैकशस्तत्प्रतीतिस्तथात्वे मानाभावादनुभूतिविरोधाच्च । तेन हेतुना समूहालम्बनास्वादप्रकाशनेनैव तस्य रसवस्तुनः काव्यात्मनो रसतत्त्वस्य पृथग्भावः पार्थक्यं खण्डशः प्रत्ययो विभावत्वेनानुभावत्वेन सञ्चारित्वेन च पृथक् पृथगनुभवप्रतीतिश्च विभावादावादिपदेनानुभावसञ्चारिणोर्ग्रहणम्, विभावादिविषये न युज्यते युक्त्योपपद्यते योगमापाद्यते । युक्तिर्योगस्तर्कोऽनुभवश्च । अत्रानुभवयोगौ ग्राह्यौ । तर्कोऽनुमानम्, तच्च नानुभवप्रत्यक्षमध्यक्षीकर्तुं क्षमते । सहृदयानुभवप्रत्यक्षतया विभावादिसमूहालम्बनात्मकस्यैव रसस्यास्वादनादिति भावः ।

**तथापि प्रथिते लोके कार्यकारणभावतः ।**
**सम्बन्धः ख्याप्यते तत्र विभावादिविशेषितः ॥ ४ ॥**

तथापीति । यद्यपि समूहालम्बनात्मतया विभावादिसंवलितो रसस्यास्वादोऽ-

भ्युपेतः काव्यादौ, तथापि तद्व्यतिरिक्तं प्रथिते प्रथमानव्यावहारिकक्रियाकल्पिते प्रसिद्धे लोके प्राणिनां नामरूपक्रियात्मके जगति काव्यातिरिक्तैन पथा कार्यंकर्तृकर्मानुकूलं कर्तुमर्हं वृत्तिविषयम्, कारणं तदनुकूलजनकत्वावच्छिन्नं हेत्वपरपर्यायं प्रयोजकत्वादिरूपं तद्भावतः कार्यत्वेन कारणत्वेन च, रसादिनिष्ठकार्यतानिरूपितकारणत्वेनेत्यर्थः। तादृशः सम्बन्धो रसाद्यनुयोगितया कार्यकारणरूपः संसर्गः विभावादिविशेषिते विभावानुभावव्यभिचारिगतवैशिष्टयनिरूपिते विभावनानुभावनसञ्चरणवृत्तिविशेषतयोपात्तश्च तत्र रसादौ वस्तुनि ख्याप्यते ख्यातिमापद्यते प्रसिद्धिमुपयाति कार्यकारणभावसम्बन्धनिबन्धनेन व्यवतिष्ठत इति भावः। अयमाशयः—लोकेऽस्मिन् प्राणिनां यो हि कारणकार्यसहकारिसम्बन्धः ख्याप्यते रत्यादिस्थाय्यात्मकरसादिवस्तुनिष्ठः स एव क्रमेण विभावनानुभावनसञ्चरणभावनाविशिष्टः काव्यादौ समूहालम्बनात्मत्वेन रसाद्यास्वादपदवीमारोहति सचेतसां चेतः सन्निविष्ट इति।

**विशेषात्परिशेषाच्च सामान्याद् या हि भावना।**
**विभावश्चानुभावश्च सञ्चारीति क्रमोदिता॥ ५॥**

**काव्यतो भावकोन्नीता सेयमेव पुनः पुनः।**
**भाव्यमाना तदास्वादप्रकाशं प्रतिपद्यते॥ ६॥**

विशेषादिति। वैशिष्टयभावाद् वैशिष्टयं च विभावादिगतं विभावताद्यवच्छिन्नम्, तच्च कारणत्वादिसत्त्वेऽपि विभावनत्वादिरूपमित्यर्थः। परिशेषात् पारिशेष्येण पर्यवस्थानात् परितः शिष्यमाणवृत्तेर्विभावनत्वादिभावनावृत्तिपरिनिष्ठितनिःशेषरूपादित्यर्थः। सामान्यात्समानभावात् साधारण्यात् साधारणीकरणक्रियोपादानात् समसंवादिसहृदयहृदयानुभूतिसमीकरणात् सफलप्रमातृहृदुन्मिषितसहजवृत्तिसमन्वयादित्यर्थः। या पूर्वोक्ता सहृदयानुभवात्मिका हीति प्रसिद्धयनुरोधेन भावना भाव्यमानरूपा पुनः पुनरनुसन्धानानुबन्धिनी वृत्तिरन्तर्मानसक्रियारूपा। सा च विभाव-आलम्बनोद्दीपनाख्योऽनुभावः कार्यरूपः सञ्चारी सहकारिकार्यप्रख्यः, इतीति स्थितिप्रकारनिदर्शनार्थम्। तादृशस्थितिक्रमेणोदिता विभावादिपूर्वकं मनसि जातोदया कृतास्पदा भाव्यमानेत्यर्थः। सोऽयं स्थितिक्रमो विभावादीनां भावनोदयात् पूर्वप्राप्तपदः प्रतितिष्ठतीति बोध्यम्।

पुनश्च—काव्यत इति। काव्यतो रसानुगतवर्णनानुकूलकविकर्मणः, पञ्चम्यास्तसिल्। उत काव्यात्तदध्ययनपरिशीलनार्थानुगमनावधारणवशादिति भावः। भाव्यन्ते भावना विषयीक्रियन्ते काव्यार्था इति भावकाः सचेतसो वासनावासितान्तःकरणा भावनोपजीविनो भावानुबन्धिमनःसमाधिमन्तस्तैरुन्नीतोद्भाविता हृदुन्नयनं प्रापिता च सेयमेव पूर्वोद्दिष्टा भावनैव न त्वन्या काऽपि तदतिरिक्ता मनोवृत्तिरित्येव-

कारेणान्यवृत्तियोगव्यवच्छेदः। पुनः पुनः काव्यतदर्थानां वारम्वारमनुपलं काला-व्यवधानेन च भाव्यमानाऽनुसन्धीयमाना परिशील्यमाना वा तादृशीयं भावना वासनात्मकसंस्कारशालिनी तस्य रसस्यास्वादप्रकाशं चर्वणावबोधं प्रतिपद्यते पर्याप्नोतीति भावनैव रसास्वादबोधहेतुरिति भावः। प्रकाशोऽयं बोधात्मक आस्वाद-ज्ञानरूपो विवक्षितः। यद्यप्यास्वाद एव रसो न त्वतदास्वादो रसासम्बन्धिरसन क्रियेति वक्तुं युज्यते, तथापि तदात्मक आस्वद इत्यभेदे षष्ठयर्थो बोध्यः। तेन तदा-स्वादप्रकाश इत्यनेन तदात्मकास्वादरूपप्रबोध इति रसास्वादप्रकाशानां त्रयाणाम-भेदार्थकत्वादुपचारितभेदः पर्यवसेयः।

**भावको भावना भाव्यमिति भेदस्तु लौकिकः।**

**तन्निष्ठस्तात्त्विको नैव यतस्तत्स्वप्रकाशता ॥ ७ ॥**

भावक इति। भाव्यमानस्वभावः कविकाव्यमर्मवित् सरससंवित्प्रमाणकः सहृदयः प्रमाता, भावकः, भावयति भावान् यस्तादृशः। भावना काव्यविषया वृत्तिः, सा च क्वचिद् विषयतासम्बन्धेन क्वचिच्च विषयितासम्बन्धेन काव्यमनुबध्नाति। भावनायां क्वचित् काव्यस्य विषयत्वेन क्वचिच्च विषयित्वेन भाव्यमानत्वात्तस्याप्यु-भयविधत्वमित्यविरोधि मन्तव्यम्। सम्बन्धिपरिवृत्तेः सम्बन्धस्यापि परिवृत्तत्वादिति-भावः। सा च पुनः पुनरनुसन्धानात्मिकेति चर्वणान्तःपर्यवसिता तद्धेतुरित्युच्यते। भाव्यं भावयितुमर्हं भावनीयं भावनाया विषयीकृतं काव्यनिष्ठं रसादिवस्तु, तदुपल-क्षणादलङ्कारादिकमप्युन्नेयम्। इतीत्थम्प्रकारेण भावकभावनाभाव्यात्मको भेदो विशेषो भावकत्वादिगतस्तु लौकिको लोकोद्भवो लोककृतस्तत्सम्बन्धी वा, त्वित्यवास्तवार्थ-निदर्शनार्थम्। तन्निष्ठो रसादिगत आस्वादगतो वा तात्त्विको रसादितत्त्वानुगतः पारमार्थिको लोकोत्तरो वा नैव नास्त्येव, तत्र सर्वथा तस्यासम्भवात्। यतो यस्मा-द्धेतोस्तस्य रसादेः स्वप्रकाशता स्वत आस्वादरूपता रसत्वेनैव रस्यमानता भवतीति शेषः। तत्र त्रयाणामपि साधारण्येन रसमयत्वेनैव प्रकाशनादिति भावः।

**स्वत्वेनाथ प्रकर्षेणास्वादमात्रानुभावनात्।**

**तावन्मात्रपरिस्फूर्तिरनुभूती रसात्मिका ॥ ८ ॥**

स्वत्वेनेति। रसात्मिकाऽनुभूतिः कीदृशीति निर्दिश्यते—स्वत्वेन रसत्वेन तस्य रसस्य स्वतःप्रकाशत्वात्स्वातिरिक्तकारणनिषेधाच्च। अथेति चानन्तर्यार्थे, ततश्च प्रकर्षेण सामग्रीसमवधानाच्चर्वणोत्कर्षमहिम्ना तत्प्रवणतन्मयीभावापन्नचिदाह्लादेन वा, आस्वादमात्रस्य रसनमात्रपरिच्छिन्नशरीरस्य तद्व्यतिरिक्तत्वेन तदप्रतीतेः। आस्वाद एव रसो, रस एवास्वादो न तु रसस्यास्वाद इति सचेतसामनुभवात्।

अतश्चास्वादमात्रपरिक्लृप्तस्वरूपस्य तस्य ( रसस्य ) अनुभावनान्मानससाक्षात्करणात्, भूयसाऽनुसन्धानेन मनोगोचरीकरणाद् वा, पुनश्च तावन्मात्रैव स्वप्रकर्षोद्गतास्वाद-मात्रनिष्ठितैव परिस्फूर्तिः परितः सर्वतोभावेन दीप्तिः, रजस्तमस्यभिभूय सत्त्वोदया-च्चिदन्तर्निरतिशयसुखावाप्तिश्च रसात्मिका रसरूपा रसप्रवणा रसप्राया रसमयी वाऽनुभूतिः सहृदयहृदयगोचरतेत्युच्यते। यद्यपि एवम्भूतानुभूतेः पूर्वं विभावादीनां कारणताऽभ्युपेता, तथापि चर्वणोपजातस्वादोत्कर्षैकाष्ठाङ्गते तस्मिन् परिस्फुरणे समूहालम्बनात्मतया रसोऽहमित्याकारा तन्मयी वृत्तिरेव रसानुभूतिर्निरुच्यत इत्यभिप्रायः।

**प्रमातुः प्रमितिः सेयं तत्प्रमेयत्वबोधिका।**
**प्रमिण्वन्ति प्रमातारोऽपरिच्छिन्नस्वरूपतः॥ ९॥**

प्रमातुरिति। प्रमातुः प्रबोद्धुः प्रमाकर्तुस्तदाश्रयभूतस्य रसास्वादयितुः सचेतसः, प्रमितिर्बोधो ज्ञानं प्रमातृवृत्तिः, तत्प्रमेयत्वं तस्य रसात्मकबोधस्य प्रमातुं योग्यत्वं प्रमाविषयत्वं यथार्थज्ञानगतत्वं वा तद्बोधिका तादृशप्रमाविषयकयोग्यत्वस्मारिका रसनिष्ठप्रमेयत्वानुकूलज्ञानजनिका सेयं प्रकृतानुगतैषा प्रमितिरुच्यते। अपि च प्रमातारस्तद्याथार्थ्यबोद्धारः प्रमाकर्तारः सहृदयाश्च अपरिच्छिन्नस्वरूपतः संवलित-स्वाकारभावनातः, प्रमातृप्रमितिप्रमेयत्वापरिच्छिन्नस्वाकारमात्रपरिगतप्रभावादिति भावः। प्रमिण्वन्ति प्रमान्ति प्रमाविषयीकुर्वन्त्यनुभवन्ति स्वाकारवदभिन्नत्वेन परि-विदन्तीत्यर्थः। किमित्याकाँङ्क्षायां रसमित्यनुकर्षणीयम्।

अयं भावः—प्रमाता प्रमितिः प्रमेयमिति त्रिपुटी रसावबोधात् पूर्वं प्रतितिष्ठति, सति च तस्मिन् प्रबोधेऽधिगतास्वादे वा प्रमातृप्रमितिप्रमेयभावविलयो भवति, केवलमपरिच्छिन्नस्वभावमात्रपरिनिष्ठप्रमुषितपरिमितवृत्तिविगलितवेद्यान्तरनिरतिशया-नन्दरूपचिन्मयरसात्मकबोधं प्रमिण्वन्ति योगिवद् रसज्ञाः सचेतसः सुधिय इत्याशयः।

**तत्रापि त्रिकभेदोऽयं समन्तात्प्रविलीयते।**
**रसोऽहमिति संबोधात् तदाकारतया स्मृतिः॥ १०॥**

तत्रापीति। यत्र प्रमातारोऽपरिच्छिन्नस्वरूपतो रसं प्रमिण्वन्ति तत्र रसप्रवणा-वस्थायां त्रिकभेदोऽयं प्रमातृप्रमितिप्रमेयगतत्रित्वप्रकारकं त्रिकं त्रिभेदजनितं प्रमातृत्व-प्रमितित्वप्रमेयत्वात्मकं पृथक् पृथगुपात्तं तस्य भेदस्तद्गतस्तद्रूपो वा समन्तात्सर्वतः सर्वथा समूलमिति भावः। प्रविलीयते प्रकर्षेण विलयं याति, तिरोभवति सन्नप्यसन्निव प्रतिभातीति भावः। अत्र प्रविलयो न प्रणाश इति बोध्यम्, व्यपगते रसावबोधे तस्य भेदस्य पुनरुदयात्, अतः प्रविलयस्तिरोभावो भेदेऽप्यभेदप्रतीतिरिति भावः। यतश्च

प्रमातुः सचेतसो 'रसोऽहम्' इति 'अहं ब्रह्मास्मि' इतिवत् तदाकारा परा वृत्तिरुदेति, तस्मात् सम्बोधात्सम्यग्रसात्मज्ञानात् तदाकारतया रसाकाराकारिता स्मृतिर्बुद्धिरनुभूतिर्वृत्तिर्वा जायत इति शेषः ।

अयं भावः—तत्र रसानुभूतिवेलायां विशेषवेशावेशपरिहारेण प्रमातृत्वादित्रिकभेदतिरोभावेन 'रसोऽहम्' इत्येव बोधोदयेन तदाकारैव रसात्मिका मनोबुद्धयहङ्कारेत्यन्तःकरणावच्छिन्नचित्तवृत्तिरुद्भवतोति त्रिकभेदप्रविलय आवश्यक इति बोध्यम् ।

**साधारण्येन सर्वेषां भावानामेकतानता ।**
**यत्र सञ्जायते तत्र रसोऽहमिति संस्मृतिः ।। ११ ।।**

साधारण्येनेति । साधारणस्य भावः साधारण्यं तेन, साधारणीकरणविधिना साधारणत्वसम्पादनप्रवणव्यापारेणेत्यर्थः । सर्वेषां समग्राणां रसानुगतानां नत्वेकेषां नापि द्वित्राणां प्रत्युत समकालं समेषामिति भाव । भावानां विभावानुभावसञ्चार्यादीनाम्, अत्र भावपदेन भावत्वावच्छिन्ननिखिलविभावादिग्रहणमभीष्टम् । एकतानता एकोन्मुखता एकत्रावधानता एकमात्रवृत्तिप्रवणतेत्यर्थः । एकतानत्वञ्चात्र रसमयत्वेन तन्मयीभवनमिति भावः । यत्र यस्यां स्थितौ रसानुभूत्यवस्थायां वा सञ्जायते सम्यगुद्भवति तत्र परमरसाविष्टवेलायां 'रसोऽहम्' रसमात्रपरिक्लृप्त स्वभावोऽहं प्रमाता सम्पन्नोऽहं ब्रह्मास्मीतिवदिति रसाकाराकारिता संस्मृतिः सम्यग् बोधः सम्यगवस्थानं सम्यगनुभूतिश्च भवतीति शेषः ।

इदमाकूतम्—यत्र विभावादीनां विशेषापहारेण साधारणीकरणक्रियया तदेकतानमनःस्थितिर्भवति तत्र तन्मयीभावेन रसोऽहमित्याकारः सम्यगनुभूतिबोधः सम्पद्यत इति ।

**विभावत्वानुभावत्वसञ्चारित्वसमन्वयात् ।**
**रस्यमानतया सैषा संस्मृती रसनक्रिया ।। १२ ।।**

विभावत्वेति । विभावनाद् विभावस्तत्त्वम्. अनु पश्चाद् भावनादनुभावस्तत्त्वम्, सञ्चरणाच्च सञ्चारी तत्त्वम्, कारणत्वकार्यत्वसहकारित्वरूपेण लोकख्याता विभावानुभाव सञ्चारित्वभावेन काव्यसङ्गताश्चेति भावः । तेषां समन्वयात् साधारण्येन सम्बन्धात् विशेषापहारेण सामान्येन काव्ये सङ्गमनाद् हेतोः, किञ्च रस्यमानतयाऽऽस्वाद्यमानवृत्त्या पुनः पुनः परिशीलनाद् रसचर्वणात्मकपरमनिर्वृत्या च सैषा पूर्वोक्ता या संस्मृतिः सम्यगनुभूतिः सा रसनक्रिया आस्वादवृत्तिः प्रमातृगतरसावबोधस्थितिरित्युच्यते ।

सेयं रसनक्रिया सचेतसां चेतःसु सञ्जायमाना स्वभानमात्रपरिच्छिन्ना समूहालम्बनात्मकेन विधिना तन्मयीभावमापन्ना न ततो व्यतिरिच्यते, स्वाकारवदभिन्नत्वेन तस्याः प्रमातृप्रमितिप्रमेयरूपतयाऽपृथग्भावेन पर्यवस्थानादिति भावः। तेन हेतुना रस्यमानता संस्मृतिः रसनक्रियेति भिन्नभिन्नशब्दैर्व्यपदिश्यमानाऽपि रसात्मपरिगता तदेकवृत्तिरेवेति बोध्यम्।

**तन्मात्रं तदवस्थानं तद्भानञ्चापि तादृशम्।**

**तेन तत्र पृथग्भावो विभावादेः कुतो भवेत्॥ १३॥**

तन्मात्रमिति। तन्मात्रं रसानुभूतिकालमात्रपरिच्छिन्नं तत्पूर्वं तदनन्तरं वा सर्वथा तस्याभावात्। तदवस्थानं तस्यास्वादमात्रशरीरास्यावस्थानमवस्थितिः सम्यगनुभवैकगम्यत्वात्। तद्भानं तस्य रसस्य प्रतीतिश्च, अपीति तदर्थक्रमसाम्यबोधार्थम्। तादृशं तद्रूपं यादृशं यावत्कालमवस्थानं तावत्कालमेव तद्भानमिति द्वयोरनुभूतिसमकालमेव सञ्जायमानत्वात्। तेनोपर्युक्तेन हेतुना तत्रानुभूतिकाले रसावस्थायां वा विभावादेरादिपदेनानुभावसञ्चारिणोर्ग्रहणम्, पृथग्भावस्तद्व्यतिरिक्तमवस्थानं भिन्नत्वं पार्थक्येन स्थितिरिति यावत्। कुतो भवेत् कथं जायेत न कथमपि पार्थक्यावस्थितिः सम्भवितुमर्हतीति भावः।

अयमाशयः—विभावादिसमूहालम्बनादेव सहृदयहृदयोद्गतरसप्रतीतेश्चर्वणामात्रविश्रान्तिस्वरूपायाः पृथगवस्थितिः विभावादेः कथं तत्र रसानुभवकाले सम्भवितुमर्हतीति तदविनाभावेन सामूहिकानुभूतिविषयत्वादिति बोध्यम्।

**हेतुत्वे हेतुता लोके कार्यत्वे कार्यता मता।**

**सञ्चारी सहकारित्वादुपकारित्वमृच्छति॥ १४॥**

हेतुत्व इति। हेतुत्वे हेतुतयोपादाने कारणत्वेनोपादीयमाने हेतुता विभावादीनां कारणता लोके लोकव्यवहारे न तु काव्ये एवञ्च कार्यत्वे कार्यतयोपादाने कार्यता कारणजन्यता लोक एव मताऽभ्युपेता, हेतुत्वाकाङ्क्षायां कार्यत्वाकाँङ्क्षायां च विभावादेरनुभावादेश्च हेतुत्वं कार्यत्वमित्युभयं लोके संगच्छते। कारणत्वेन कार्यत्वेन च तद्व्यपदेशो युज्यते। किञ्च सञ्चरणात्कारणकार्यान्वयेन सञ्चारी व्यभिचारिपरपर्यायः सहकारित्वात् समक्रियानुसारित्वात् सहकार्योपयोगित्वाच्च सहोपादानसंयुक्तत्वादिति भावः। उपकारित्वं सहायत्वमनुकूलत्वमुपकरणयोग्यत्वञ्च ऋच्छति गच्छति तद्रूपत्वमाप्नोतीति।

लोके विभावादेर्हेतुत्वमनुभावादेः कार्यत्वं सञ्चारिणः सहकारित्वमभ्युपेयते पर काव्ये विभावनादिव्यापारविशेषात् विभावानुभावसञ्चारीतिनामान्तरव्यपदेशो रसानुकूलतया सञ्जायते इति भावः।

**लोकज्ञानाय लोकेऽस्मिन् लौकिकं कारणादि तत् ।**
**काव्ये काञ्चित् परां संज्ञां विभावादीति विन्दति ॥ १५ ॥**

लोकज्ञानायेति। लोकज्ञानाय लोकगतव्यवहारबोधाय सर्वस्यापि व्यवहारजातस्य कारणकार्यभावसम्बन्धानुबन्धित्वात्। अस्मिन् लोके दृश्यमाने जगति तत्प्रसिद्धं लौकिकं लोकगतं लोकोद्भवं लोकानुबन्धनं वा कारणादि कारणकार्यसहकारीति कल्प्यते, तदेतल्लोकगतमेव कारणादिकल्पनं ज्यायस्तत्र कार्यमात्रस्य कारणजन्यत्वात् कारणमात्रस्य च तज्जनकत्वादिति भावः। तदेतद्विपरीतं तु काव्ये कविकर्मत्वावच्छिन्ने सहृदयलोकालोकसम्बन्धिनि विभावादीति, कारणं विभावः, कार्यमनुभावः, सहकारी सञ्चारीति विभावनानुभावनसञ्चरणव्यापारविशेषेण तेषां परिणमनाद् विभावादित्वेन च सचेतसां चेतसि समनुभूयमानत्वाच्च तद् विभावादि परां लोकोत्तरां लोकेतरां तद्विलक्षणां च संज्ञां व्यपदेशं काव्यव्यवहारयोग्यत्वं विन्दति पर्याप्नोति। यानि कारणानि कार्याणि सहकारीणि च लोके तान्येव काव्ये विभावानुभावसञ्चारिव्यपदेशवैलक्ष्येण व्यवह्रियन्त इति भावः।

**रत्यादिस्थायिनामेषाऽभिव्यक्तिः काव्यसङ्गता ।**
**वासनोन्मिषिता काचिच्चितिरुच्चैः सचेतसाम् ॥ १६ ॥**

रत्यादीति। रत्यादिस्थायिनां रतिरादौ येषां ते रत्यादयः, आदिपदेन हासशोकक्रोधोत्साहभयजुगुप्साविस्मयानां ग्रहणम्। रतेः स्थायित्वेन व्यभिचारित्वेन लोकाकर्षकमूलभावत्वेन च सर्वार्थजननतात्पर्येण प्राधान्यं बोध्यम्। तेषां रत्यादिस्थायिनां स्थायित्वेन प्राक्तनेदानीन्तनसंस्कारसहकृतभावनात्वेन सहृदयहृदयनिष्ठतया स्थायित्वमेषामुच्यते, तादृशानां स्थायिभावानामभिव्यक्तिरेषा विभावादिभिरभितो व्यञ्जनया प्रतीतिः, रसत्वेनाऽऽस्वाद्यत्वेन चानुभूतिरेषा सुप्रतीता सहृदयसमुदायसुप्रसिद्धा च, काव्यसङ्गता कविकर्मधर्मसंसर्गसंसृष्टा काव्यानुगता काव्यसंगतिमापन्ना वा, पुनश्च वासनोन्मिषिता वासनया संस्कारजबीजेनोद्भूता सहृदयतावशादुद्गता सचेतसां चेतोवतां काव्यमर्मविदां सुहृदां चोच्चैरूर्ध्वमुन्नतं शीर्षस्थमनुत्तममित्यर्थः। काचिदाख्यातुमपर्याप्ता विलक्षणा चितिर्ज्ञानं चैतन्यं चिदात्मिका वृत्तिः परमाह्लादमयी संवित्तिरेव रसाभिव्यक्तिरिति भावः।

**रसनास्वादनिर्ह्लादैस्तावत्कालमलौकिकी ।**
**निर्वृतिर्या परा सेयं संविदेव चिदात्मिका ॥ १७ ॥**

रसनेति । रसनास्वादनिर्ह्लादै रसनेन रसीभावेन य आस्वादश्चर्वणा तज्जायमानैर्निर्ह्लादैर्निरतिशयानन्दैः, अथवा रसनमास्वादो निर्ह्लादश्चेति तैः करणभूतैः, तावत्कालं तन्मात्रसमयं यावत्, रसानुभवकालपर्यन्तम्, रसनास्वादनिर्ह्लादैसञ्जायमानलोकोत्तरसुखावाप्तिसमयावधिकमिति यावत् । तत्राप्यलौकिकी लोकोत्तरा लोकातिक्रान्तभावनोपगता लोकातिशायिनीत्यर्थः । एवम्भूता या परा परमा लोकोत्तरोत्कृष्टा परात्मसविधवर्तिनी च निर्वृतिर्निर्वर्तनं निःशेषतया समवस्थानं निष्कृष्टस्थितिरिति यावत् । सेयं सुख्याता पुरा निर्दिष्टा साक्षादनुभूयमानतया मनोगोचरीकृता चिदात्मिका ज्ञानात्मिका चैतन्यस्वरूपा तन्मयभावापन्ना चेतनधर्मावच्छिन्ना चिदेवेत्याकारेण परिगृहीता संविदेव संविज्ञानमेव रसानुभवनिर्वृतिरित्युच्यते । सा च विभावादिसंवलनाद् रसमयी ब्रह्मानन्दसविधसंविन्मयचिदात्मिका वृत्तिः परिकीर्त्यते । संविदेव चिदेव च रसात्मिका निर्वृतिरिति भावः ।

**तत्र भावान्तरस्पर्शो जातुचिन्नैव युज्यते ।**
**तन्मयीं चित्तवृत्तिं तां समास्थाय चितिस्थितिः ॥ १८ ॥**

तत्रेति । तत्र तन्मयतया रसानुभवकाले रसाविष्टचेतसि भावान्तरस्पर्शोऽन्येषां भावानां लौकिकसुखादीनां संसर्गो जातुचित्कदाचिदपि नैव युज्यते न युक्तियुक्तः प्रसज्यते, भावान्तरस्पर्शे तन्मयतया तदनुभूतेरभावात्, विगालितवेद्यान्तरेण रसास्वादसुखोदयाच्च । अतश्च तन्मयीं तदाकारां रसस्वरूपां तत्त्वापन्नां च चित्तवृत्तिं चित्तस्य मनसो वृत्तिं व्यावृतिं स्थितिमवस्थां च तां सहृदयसुप्रतीतां समास्थाय सम्यगासमन्तादालम्ब्याश्रित्य चितिस्थितिश्चितेश्चेतनाया या स्थितिरवस्थानं सैव स्थितिस्तादृशरसानुभूतिरित्यवसातव्यम् ।

अयं भावः—तत्र रसानुभवकाले भावान्तरस्पर्शाभावात् तन्मयी मनोवृत्तिरेव तावन्मात्रोपगता चितिस्थितिरेव रसानुभूतिरित्युच्यते ।

**चिदेवेति चिदाकारादविशेषात्तदुद्भवः ।**
**यतस्तत्र न वैशिष्टयं साधारण्यात्प्रतिष्ठते ॥ १९ ॥**

चिदेवेति । चिच्चैतन्यं ज्ञानमखण्डबोधश्च सैव, एवकारेण चिदतिरिक्ताज्ञानादेर्व्यवच्छेदो बोध्यः । इतीति प्रकारबोधकम् । तेन चिदेवेत्याकारेण चिदाकाराच्चैतन्यस्वरूपात् पुनश्चाविशेषात्सामान्यात्साधारणीकरणनियमात्तदुद्भवस्तस्योद्भूतिरनु-

भूतिरास्वादश्च भवतीति शेषः। अत्रोद्भवो नोत्पत्तिपरकः प्रत्युतानुभूतिरास्वाद-एवोद्भवस्तस्येति विज्ञेयम्। चिदाकारतया चिदेवाविशेषाद् रसानुभूतिरिति भावः। यतश्च यस्माद्धेतोस्तत्र रसानुभूतौ रसास्वादस्थितौ साधारण्यात् साधारणस्य भावः साधारण्यं तस्मात् साधारणीकरणविधानात् सहृदयसामान्यानुभवाच्चेत्यर्थः। वैशिष्ट्यं कश्चिदपि विशेषधर्मो नामरूपक्रियादिरूपश्च, किमपि वा विशिष्टगतं वैशिष्ट्यं न प्रतिष्ठते प्रतिष्ठां स्थितिं वृत्तिं वा नोपयाति, सर्वं वैशिष्ट्यं प्रविलीयते। साधारण्याद् वैशिष्ट्यं बाधितं सन्न तत्र स्थितिमासादयतीति भावः।

**अथवा चिद्विशेषेण भग्नावरणतां गतम्।**
**तज्ज्ञानमिति सम्बोधस्तद्योगात्तदवस्थितिः ॥ २० ॥**

अथवेति। अथवेति विकल्पान्तरं प्रस्तौति, चिदिति चैतन्यविशेष्याकारेण तदनुभूतिराख्याता, सम्प्रति विकल्पान्तरेण चिद्विशेषणतया रत्याकारेण तदास्वाद-इति मतान्तरव्याख्यानम्। वस्तुतस्तु विशेष्यविशेषणभावसम्बन्ध आस्वादबोधार्थको न तात्पर्येण प्रत्यवसेयः। क्वचिद् विशेषणतया क्वचिच्च विशेष्यतया तदास्वाद एव तात्पर्येण पार्यान्तिकप्रतिष्ठानात्। अतश्च चिद्विशेषेणापि भग्नावरणतां निरस्त-समस्ताज्ञानजनिताच्छादनतां जगदज्ञानवृत्तिरूपतां च गतं प्राप्तं तज्ज्ञानं तस्य रसस्य ज्ञानमास्वादात्मकं चिदुद्गतं तत्प्रकारकं चैतन्यमिति तदाकारो यः सम्बोधः सम्यग्बुद्धिः साध्ववभानं तद्योगात्तादृशसम्बोधसम्बन्धाच्च तदवस्थितिस्तस्य रसस्या-नुभूत्यवस्थानं भवतीति शेषः। उभयत्रापि भग्नावरणत्वं चिन्मयत्वं चावश्यकम्। केवलमेकत्र चिद्विशेषणत्वेऽन्यत्र च चिद्विशेष्यत्वे तद्योगात्तद्बोध इत्याशयो बोध्यः।

**वस्तुतश्चिदचिद्भावभूयिष्ठा रसनक्रिया।**
**चिदात्मत्वाचिदात्मत्वाल्लौकिकोऽलौकिको रसः ॥ २१ ॥**

वस्तुत इति। वस्तुतो वास्तवतः परमार्थतस्तत्त्वार्थतश्च, चिदचिद्भावभूयिष्ठा चिद् ज्ञानमचिदज्ञानं तयोर्भावश्चिदचित्त्वे तद्भूयिष्ठा तत्प्रचुरा तद्बहुला वा रसन-क्रिया रसास्वादवृत्तिराख्याता। चित्त्वेन परमार्थता लोकोत्तरता ब्रह्मानन्दसहोदरता चाभ्युपेतव्या, अचित्त्वेन च विभावादिसम्बन्धबोधकताऽसदर्थता लौकिकता चाङ्गी-कार्या। तेन चिदात्मत्वाज्ज्ञानरूपत्वादलौकिको लोकोत्तरोऽचिदात्मत्वादज्ञानरूपत्वा-ल्लौकिको लोकानुगतो लोकोद्भवो वा रसो मन्तव्यः। अत्राज्ञानं रसाननुभवो न तु ज्ञानाभावो बोध्यः।

अयं भावः—लौकिका विभावादयो रसालम्बनभूता नामरूपक्रियादिसंसर्गव-शाद् यावन्न समूहालम्बनतयाऽऽस्वादपदवीमभ्युपगच्छन्ति तावदचिद्रूपा एव पर्यव-

तिष्ठन्ते, प्राप्तेषु च तेषु तन्मयत्वेनानुभूयमानेषु रसास्वादस्थितिमलौकिकाः सम्पद्यन्ते-इति चिदचिदुभयरूपेण रसनक्रिया कल्पितेति भावः।

**लोकोत्तरत्वे चिद्रूपमचिद्रूपं तदन्यथा।**
**अखण्डत्वेन तद्भावःसखण्डत्वेन च द्विधा॥ २२॥**

लोकोत्तरत्व इति। चिदचिद्रूपतया तद्द्वैविध्यं कथमिति निर्दिश्यते—तस्य रसादेर्लोकोत्तरत्वे लोकादतिरिच्यमानत्वे लोकादूर्ध्वमुत्तीर्णत्वे च सति चिद्रूपं ज्ञानमयं चिन्मयं वा स्वरूपं पर्यवतिष्ठते, तदन्यथा तस्माल्लोकोत्तरत्वादन्यथाऽन्यभावे लौकिकत्वे सति चाचिद्रूपमज्ञानमयमनुभवच्युतं लोकवेद्यमित्यर्थः। तेनाखण्डत्वेन पूर्णत्वेनाखण्डशोऽनुभूयमानत्वेन च तद्भावस्तस्य रसस्य भावः सत्ताऽवस्थानमधिगमो वा, च पुनः सखण्डत्वेन विभावादिखण्डरूपत्वेन खण्डशो ज्ञायमानत्वेन वा तद्भावस्तदवस्थितिरिति द्विधा द्विप्रकारकस्तद्बोधः पर्यवसेयः।

अयमभिप्रायः—लोकोत्तरत्वेन लौकिकत्वेन च चिदचिद्रूपत्वमस्य रसस्य स्थितिः पुनश्चाखण्डतया सखण्डतया च द्वैविध्यमाप्नोतीति तात्पर्यम्।

**विभावाद्यनुयोगेन रसस्यास्य सखण्डता।**
**रस्यमानतया योगाभावे (भाने) चाखण्डता मता॥ २३॥**

विभावादीति। विभावा विभाव्यमानपदार्था आलम्बनरूपा उद्दीपनरूपाश्च, आदिपदेनानुभावाः सञ्चारिणश्च, तेषामनुयोगेन अनुगतसम्बन्धेन यथा—विभावतावच्छेदेनानुभावतावच्छेदेन सञ्चारितावच्छेदेन च पृथक् पृथक् संयोगेन चास्य रसस्यास्वादरूपस्यानन्दमयस्यापि सखण्डता खण्डरूपता खण्डशो बोध्यमानता भवति, पुनश्च रस्यमानतयाऽऽस्वाद्यमानतया रस्यमानरूपतया च योगाभावे तादृशसम्बन्धपरिहारे पृथक् पृथक् सम्बन्धाभावे सति, किं वा तादृशयोगस्याभानेऽप्रतीयमाने विभावादिसम्बन्धप्रतीत्यभावे चाखण्डता पूर्णता केवलं रसमयत्वेनापरिच्छिन्नरूपता तस्य मताऽभ्युपेता, अखण्डार्थबोधः सखण्डार्थबोधश्च रसादेर्लौकिकत्वेनालौकिकत्वेन च पर्यवसातव्यः।

**निर्वृतिश्चितिराह्लादो रसावस्थेति तद्भिदाः।**
**रसात्मैव रसः प्रोक्तोऽनुभूतेश्च श्रुतेः स्मृतेः॥ २४॥**

निर्वृतिरिति। निःशेषा वृतिर्वर्तनं निःशेषावस्थानं वा निरतिशयस्थितिरित्यर्थः। चितिश्चेतना चैतन्यं बोधो वा, आह्लादो हृद्गतानन्दः सुखापरपर्यायश्च, अपि च रसावस्था रसानुभूतिविशिष्टा मनोवृत्तिः, रस्यमानचेतःस्थितिश्चेति तद्भिदास्तस्य रसस्यानुभवभेदाः प्रतिपादिताः। पुनश्च रस कीदृश इत्याकांक्षायां

रसात्मैव रसः, रसरूप एव रसः, रस्यमानस्वरूपतयैव रसस्यानुभवात् तदतिरिक्ततया तद्बोधाभावाच्च यो रस्यमान आस्वाद्यमानोऽनुभूयमानो बा स्वात्मत्वेन स एव रसः प्रोक्तः। तत्र हेतुरुच्यते—अनुभूतेरनुभवात् सचेतसाम्, श्रुतेः श्रवणात् श्रुतिवचनाद् वा, स्मृतेः स्मरणाद् बोधाद् वा इत्थं हेतुत्रयेणापि 'रसात्मैव रसः' इति रसस्य लक्षणं संगच्छते तस्य लक्षणान्तराप्रसक्तेः।

**सविकल्पोऽथवा तत्र निर्विकल्पो न युज्यते।**
**तस्य नैयत्यमाधातुं यतोऽसौ तद्द्वयात्मकः॥ २५॥**

सविकल्प इति। विकल्पो विशेषेण कल्पितः संस्काराधानेन योजितो नामजाति-क्रियारूपात्मको भावस्तेन सहितः सविकल्पो विशिष्टकल्पनोम्भितः, अथवा पक्षान्तरेण निर्विकल्पो विशिष्टकल्पनाराहित्येन नामरूपजात्यादिविरहेण केवलपिण्डाकारेण प्रतीतो निर्विशेषभावात्मकः, तादृशोभयात्मकोऽपि सविकल्पको निर्विकल्पको वा भावस्तत्र रसादौ रसानुभवप्रत्यायने न युज्यते न युक्त्या तिष्ठतीति। सविकल्पकत्वे निर्वचनीयत्वापत्तेर्निर्विकल्पकत्वे च तस्यानिर्वचनीयत्वप्रसक्तेश्च। आख्यैयानाख्येय-त्वोभयव्यतिरिक्तत्वेन तस्य रसादेर्व्यवस्थानादिति भावः। अतश्च तस्य रसादेस्तदनु-भूतेर्वा नैयत्यं नियामकत्वं नियतस्थितिप्रत्यायकत्वं वाऽऽधातुं स्थिरीकतुं सविकल्पा-निर्विकल्पो द्वयात्मकोऽपि भावो न पर्याप्नोति, यतश्चासौ रसादिस्तद्द्वयात्मकोऽवस्था-विशेषमादाय विकल्पात्मकोऽन्यत्र निर्विकल्पात्मकश्चेति भावः।

**इत्थमन्ये प्रकारा ये तद्भानार्थं निरूपिताः।**
**तेऽपि तत्र न युज्यन्ते नैकैकेन च तद्भवः॥ २६॥**

इत्थमिति। इत्थमुक्तप्रकारकनिदर्शनानुरूपं यथा सविकल्पो निर्विकल्पो वा भावो निरस्तोऽपर्याप्ततया रसादौ तदनुभूतिप्रतीतौ वा तथैवान्येऽनुमानोपमानादिप्रकारा विशेषा बोधोपायभूताः स्मृत्यादयो वा ये तद्भानार्थं रसादिप्रतीत्यर्थं तदास्वादबोधाय वा निरूपिता निरूपणविधया निर्दशितास्तत्तन्मतान्तरेषु तेऽपि सर्वेऽप्यनुमानादि-प्रकारास्तत्र रसादौ तदास्वादबोधे च न युज्यन्ते न युक्तिमर्हन्ति, तस्य सहृदयहृदय-प्रमाणकत्वेन तन्मात्रगोचरीक्रियमाणत्वात्। यतश्चैकैकेन केवलेनानुमानेनोपमानेन स्मरणेन प्रकारान्तरेण वा केनचित्तद्भवो रसोद्गमो न भवतीति शेषः।

किञ्च नानुमानिको नौपमानिको न स्मरणात्मको न चान्येन केनापि प्रकारेण तदात्मको वा रसादेरुद्भवः प्रत्युत सहृदयास्वादगोचरीकृतो रसादिस्तन्मात्रवेद्य इति हार्दोऽभिप्रायः।

**सामग्र्येण समग्राणां भावानां समवस्थितौ ।**
**अनुभूत्याश्रितं तावन्मात्रं तद्भानमुम्भितम् ।। २७ ।।**

सामग्र्येणेति : सामग्र्येण समग्रतया न त्वांशिकरूपेण नापि कालादिव्यवधानेन न वार्धादिभागेन च समग्राणां सम्पूर्णानां सम्यगग्रे कृतानां वा भावानां विभावानुभावादीनां समूहालम्बनतयोदितानां समवस्थितौ समानावस्थायां सम्यगवस्थाने समसमुदितात्मसद्भावे च, अनुभूतिसाक्षिकमनुभवप्रमाणकं सहृदयानुभूतिरेव साक्षित्वेनात्मप्रत्यक्षत्वेन गृह्यते यत्र तत्तादृशं तावन्मात्रमनुभवकालिकं न वा तत्पूर्वं न च तदनन्तरमिति भावः। तद्भानं तस्य रसस्य प्रत्ययो मानसिकप्रत्यक्षः सहृदयानुभूयमानतदाह्लादरूपमुम्भितम्, कल्पितं स्मृतं प्रतीतं वेत्यर्थः ।

तेनानुभवैकगम्यत्वं सहृदयैकवेद्यत्वं तावन्मात्रस्थायित्वं समग्रभावसामग्रीसंवलनत्वं च रसस्य लोकत्तरत्वं प्रत्याययतीति तात्पर्यं बोध्यम् ।

**वासना प्राक्तनी हेतुस्तथेदानीन्तनी च सा ।**
**तदुद्रेकेण तस्यैषाऽनुभूतिस्तत्क्षणात्मिका ।। २८ ।।**

वासनेति । वसनं वासो हृदयस्थानं यस्याः सा वासना भावना संस्काररूपा बीजरूपेण संनिहिता वृत्तिमयी नानाभावानुरूपा च प्राक्तनी पूर्वजननानुगता नैकजननान्तरसङ्गता वा तथेदानीन्तनी चैतज्जन्मानुबन्धिनी, आजन्मन आ चावसानादायुषो विनिविष्टा तिष्ठति। सा च समुचितसमयानुगतसामग्रीसमवधानात् समुदिता रत्युत्साहादिस्थायिभावानुरूप्येण हेतुः साक्षात्कारणं तत्र रसादये भवतीति भावः। तेन तदुद्रेकेण तस्याः प्राक्तनेदानीन्तवसनोद्गमेन तस्य रसस्यैषा सहृदयगोचरीकृताऽनुभूतिः प्रतीतिरास्वादात्मिकाऽऽह्लादरूपा वा तत्क्षणात्मिका रसानुभवकालमात्रपर्यवसिता पर्यवतिष्ठते ।

वासनैव सापि जन्मान्तरोद्भूता साम्प्रतिकजननोद्गता सहृदयहृदयसन्निहिताऽनुभवक्षणमात्रपरिकलिता रसास्वादे हेतुरुच्यते न तु किञ्चिदन्यदिति भावः ।

**भावको भावनोत्थानात्तद्भानं प्रतिपद्यते ।**
**सोऽपि तन्मयतामेति त्रिवृत्तिविनिवृत्तितः ।। २९ ।।**

भावक इति । भाव्यतेऽनेन भावयति यो वा स भावकः, भावानां काव्यगतानां लोकोदितानां वा भावयिता भावक इत्युच्यते । तस्मिन् भावक एव भावनाया भाव्यमानवृत्तेर्वासनारूपायाः सूक्ष्मतया तन्मनः सन्निहितायाश्चोत्थानमुद्रेक उद्गमो विशेषसामान्यभावादुद्वेलनं जायते । तस्मात्सामयिकोत्थानात्स भावकः सहृदयः तस्य

रसस्याह्लादरूपस्य भानं प्रतीतिमनुभूतिं वा प्रतिपद्यते प्रतिपदाप्नोति प्रत्येति प्रत्यगासादयतीति भावः। ततश्च तादृशलोकोत्तरप्रत्ययभानमासाद्य मनसा गोचरीकृत्य च तन्मयतां तद्रूपतां रसाविष्टचेतोवृत्तिप्रत्यन्तरोकृतात्मतां चैति गच्छति, सा च तन्मयता त्रिवृत्तिविनिवृत्तितों भावकभावनाभाव्यत्वरूपवृत्तित्रयपरिहारेण रसोऽहमित्याकारेण च सम्पद्यते।

**सोऽहमित्येवमाकाराद् रसोऽहमिति संस्मृतिः।**
**ब्रह्मानन्दपरानन्दचिदात्मानन्दवृत्तिवत् ॥ ३० ॥**

सोऽहमिति। सोऽहमिति तत्पदेन परात्मनो ग्रहणम्, अहम्पदेन च जीवस्येति योऽयं जीवः स परात्मैव न ततः पृथग्भूत इति वेदान्तोपदिष्टश्रौतसिद्धान्तनिर्दिष्टब्रह्माद्वैतवदित्यर्थः। इत्येवमाकारादित्येतादृशानुभवसदृशाद् यथा सोऽहं ब्रह्मास्मि तथैवेत्यर्थः। रसोऽहं रस्यमानस्वरूपोऽहं प्रमाता साक्षादास्वाद एवेति संस्मृतिः सम्यग् बोध; साक्षात्कारः तदाकारतया प्रतिपत्तिर्भवतीति शेषः। अहं ब्रह्मास्मीतिवद् रसोऽहमिति रसाकारतया ब्रह्मानन्दसहोदरत्वमस्य रसस्य प्रतिष्ठते, तत्साधर्म्यात्तत्प्रवृत्तेश्चेति भावः। तत्र ब्रह्मानन्दो ब्रह्मणः परमात्मन आनन्दो निरतिशयसुखम्, परानन्दः परः परमोत्कृष्टोऽनिर्वचनीयो निरञ्जनश्चानन्दः परमाह्लादः, किञ्च चिदानन्दः चिच्चैतन्यं चेतनो वा जीवो ज्ञानात्मा वा तदानन्दस्तत्सुखं सातिशयनिरतिशयनिर्विशिष्टं तद्वृत्तिवत्तादृशव्यापारवद्ब्रह्मपरचिदानन्दवृत्तिमद्रसानुभूतिवृत्तिरितितात्पर्यमवधेयम्। यादृशो ब्रह्मानुभवस्तादृशो रसानुभव इति भावः।

**अनिर्वाच्योऽनुभूतित्वे निर्वाच्यश्चात्महेतुतः।**
**रसोऽय तेन सम्प्रोक्तो ब्रह्मानन्दसहोदरः॥ ३१ ॥**

अनिर्वाच्य इति। ब्रह्मानन्दसादृश्यमनुसन्धाय सहृदयैरनुभूयमानो रसोऽयं न तद्रूपः प्रत्युत तत्सहोदरः कथमित्याह—ब्रह्मानन्दः सर्वथाऽनिर्वचनीयः परं तत्प्रतीपो रसोऽयमनुभूतित्वे सहृदयहृदयसाक्षात्कृत्वे प्रमातुरनुभवगोचरत्वे चानिर्वाच्यो वागविषयो वक्तुमशक्यश्च तदानीं त्रिपुटीलयेन रसाकारमात्रेण तन्मयीभावापन्नत्वात्। अतश्चास्मिन्नंशेऽस्य रसस्यानिर्वचनीयता सिद्ध्यति, पुनश्चात्महेतुतोऽत्रात्मपदेन रसस्य ग्रहणम् तद्धेतुर्विभावादिः तत्र विभावाः कारणान्यनुभावाः कार्याणि सञ्चारिणः सहकारिण इत्येवं कार्यकारणसंयोगादयं रसो निर्वाच्यो निर्वक्तुं शक्यो निःशेषेण स्वरूपाभिधानेन लक्षणार्ह इति भावः। तेन हेतुना निर्दिश्यमानो लक्ष्यमाणो वाऽयं रस्यमानधर्मो रसो ब्रह्मानन्दस्य परात्मजनितनिर्विशेषसुखस्य सहोदरः समानकल्पः सदृशजन्मा वा सम्प्रोक्तः सम्यगाख्यातः। तेनानिर्वचनीयत्वं निर्वचनीयत्वमित्युभयमस्य रसस्येति भावः।

**सहोदरत्वं साम्यत्वं समानोऽनुभवो द्वयोः ।**

**परात्मरसयोः काचित् स्थितिरेषा विलक्षणा ।। ३२ ।।**

सहोदरत्वमिति । सहोदरत्वं समानगर्भत्वं सदृशोत्पत्तिस्रोतःस्थानत्वमिति तदेव साम्यत्वं सादृश्यलक्षणसमन्वयादुपचर्यते तच्चैकमूलत्वेन संगच्छते, तत्र समानोऽनुभवो सदृशानुभूतिर्निर्वृतिलक्षणश्चिदाह्लादो द्वयोः समवर्तिनोः परात्मरसयोश्चिदात्मतद्विशिष्ट-व्यक्तीकृतरत्यात्मनोर्निर्विशेषेण सविशेषेण च गोचरीक्रियमाणयोस्तयोः काचित् तद्विदेकवेद्यत्वेन विगलितवेद्यान्तरत्वेन तन्मयीभावानुविद्धत्वेन चैषा यथोक्तनिर्दिष्टा विलक्षणा वैलक्षण्येन ज्ञायमाना, अनिर्वचनीयत्वेन लोकोत्तरत्वेन च प्रतीयमाना स्थितिर्दशाऽवस्था परात्मिका रसात्मिका चिन्मयी पर्यवस्थितिरस्तीति बोध्यम् । विभावादिसमूहालम्बनात्मरत्यादिचिद्विशिष्टरसनावस्था निर्विशिष्टपरात्मचिन्मात्र बोधावस्थेति द्वयोः परात्मरसयोः केवलं विशेषणांशविशेषपर्यवसायिनी न तु विशेष्यांश-भेदानुयोगिनीति बोध्यम् ।

**तादृशानुभवाद् ब्रह्मानुभूतिर्युक्तयोगिनाम् ।**

**तदानन्दहृदुन्मेषाद् युञ्जानसुहृदामपि ।। ३३ ।।**

तादृशेति । तादृशोक्तसमाननिर्वृतिलक्षणानुभूतिवशाद्धेतोर्युक्तयोगिनां वेद्यान्तर-संस्पर्शशून्यस्वात्ममात्रपर्यवसितापरिमितयोगानुकूलसंवेदनविलक्षणालौकिकात्मसंवेदनशा-लिनां परमात्मभावितात्मनां महात्मनां ब्रह्मानुभूतिः परात्मचिन्मयानुभवात्मिकाव-स्थितिर्भवतीति भावः । तथा च तदानन्दस्य तद्वदाह्लादस्य ब्रह्मानन्दसदृशानुभव-जन्यरसास्वादसुखस्य हृदुन्मेषाच्चित्तपरिस्फूर्तेस्तदाकारचित्तवृत्तिविस्मृतेश्च युञ्जान-सुहृदां लौकिकविभावादिसंवलितप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिपरिमितयोगानु-गतप्रतीतिविदां सुहृदां शोभनसंवेदनसंवादिमानसानां सहृदयानामपि रसानुभूतिर्जायते निर्विचिकित्समिति तात्पर्यमवसेयम् । "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" इत्युक्तेः सहृदयानां योगिनाञ्च साम्यावस्थेति बोध्यम् ।

**योगिवद् रसनं चिद्भूपरिस्फूर्तिः सचेतसाम् ।**

**क्षणस्थायि स्वतोभावि व्याप्नोत्यात्मानमात्मना ।। ३४ ।।**

योगिवदिति । योगिनो युक्तयुञ्जानभेदेन निर्विकल्पकसविकल्पकसमाधिमन्तो द्विविधाः परिकल्पिताः, तद्वदेव रसनमास्वादो ह्लादो रसोऽहमित्याकारकतादात्म्य-सुखावबोधश्च चिद्भूपरिस्फूर्तिश्चिज्जन्यहृदुन्मेषश्चितेरानन्दप्रपत्तिः सचेतसां तद्विदां सवासनानां सहृदयानां भवतीति शेषः । तच्च तादृशमलौकिकं रसनं क्षणस्थायि क्षणं

तिष्ठतीति रसास्वादसमकालतदवस्थानात्तदाकारचित्तवृत्तिरूपत्वात्तावन्मात्रतदुन्मेषादिति भावः। अपि च स्वतोभावि स्वतः प्रामाण्यपर्यवसायित्वाद् रस्यमानतया स्वत्वेन सम्भवनादिति तस्य स्वतोभावित्वं बोध्यम्। तथाहि आत्मना रसात्मना स्वाकारेण तन्मयीभावेन चात्मानं रसात्मतादात्म्यात्प्रमातुः सचेतसो रसात्मत्वाद् रसीभूतात्मानं रसात्मकं स्वरूपं व्याप्नोति परिव्याप्य तिष्ठति—"स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः" इत्युक्तेः।

**क्षणस्थायितया तत्र ब्रह्माकारानुभूतितः।**
**भेदः संकल्पते भूयो ज्ञानभानविशेषतः॥ ३५ ॥**

क्षणस्थायीति। क्षणं रसास्वादसमकालं स्थायितया विद्यमानतया यावद्रसं तदाह्लादोपपत्तेस्तत्र रसने स्वादने ह्लादने वा ब्रह्माकारानुभूतितः परमात्मस्वरूपसाक्षात्कारतो भूयो भूम्ना पर्याप्तप्रकारकानुभवकृतवैशिष्टयेन भेदे विशेषः पार्थक्यं संकल्पते संकल्पितः स्मृतो मतो वा भवति—एकत्र तावन्मात्रसमयसमवस्थानादपरत्र च निरवधिसमाधिसन्धानादिति बोध्यम्। स च द्वयो रसनब्रह्मणोरनुभूतिजन्यो भेदो भूयोज्ञानाद्भूयोभानाद् वा विशेषात् सम्पद्यते। तदुक्तं भूयोज्ञानभानविशेषतः—"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्युक्तेः, "रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति श्रुत्यन्तरोक्तेश्च। एकत्र सत्यज्ञानस्यानन्त्योक्तिरन्यत्र च रसलब्धेस्तादात्म्यापत्तिरिति तात्पर्यमवसेयम्। रसानुभूतिर्ब्रह्मानुभूतेः सोपानमित्यपि बोध्यम्।

**तेन ज्ञानात्मकत्वेन श्रुत्युक्तेः परमार्थतः।**
**परात्मत्वमपि प्रोक्तं रसस्यास्याविरोधि तत्॥ ३६ ॥**

तेनेति। तेन पूर्वोक्तेन ज्ञानभानविशेषेण हेतुना ज्ञानात्मकत्वेन सत्यज्ञानानन्तस्वरूपेण श्रुत्युक्तेः श्रुत्युक्तवचःप्रामाण्यात्परमार्थतस्तत्त्वार्थदृष्टया विचार्यमाणे रसस्य रस्यमानस्वरूपस्यास्य परात्मत्वमपि नित्यशुद्धबुद्धज्ञानात्मपरमात्मरूपत्वमपि प्रोक्तं प्रकर्षेणाभिहितं शास्त्रकृद्भिरिति शेषः। अपिना सत्यपि पार्थक्ये ततस्तदपार्थक्यं पर्यवसीयते! यतश्च भानस्यापि ज्ञानान्तर्वर्तित्वान्निर्विशेषेण सिद्धयतीति बोध्यम्। नित्यानित्योभयबोधवैलक्षण्येन तस्यानुभूतेरभ्युपगमादिति भावः। ततश्च तस्य रसस्य परात्मस्वरूपस्य यदुक्तं परमात्मरूपत्वं तदविरोधि तन्न विरुद्धम्, ब्रह्मानन्दसहोदरस्य रसानन्दस्य तद्रूपत्वाङ्गीकारेऽप्यविरोधात्, आहार्यभेदस्यैव तत्र कल्पितत्वादिति भावः।

**तथात्वेऽप्यतथात्वेऽपि निर्वाच्यत्वं न युज्यते ।**
**प्रमातृत्वप्रमोषाद्धि तन्मयाकारभानतः ।। ३७ ।।**

तथात्व इति । तथात्वे परात्मरूपत्वे स्वीकृते, अप्यतथात्वे तदितररसनमात्रह्लादात्मत्वे रत्यात्मपरिच्छिन्नेऽभ्युपेतेऽपि, अपिद्वयं क्रमबोधकम् । उभयत्र स्थले तत्र निर्वाच्यत्वं स्वशब्दाभिधेयत्वं शृङ्गारादिरसपदेनाभिधानत्वं न युज्यते युक्त्या संगच्छते—युक्तिश्च स्वशब्दवाच्यत्वे तदास्वादाभावो विभावादिसत्त्वे तदास्वाद इति । "रसस्तु स्वप्नेऽपि न वाच्य" इत्याचार्यमम्मटादिसम्मतिः । किञ्च प्रमातृत्वप्रमोषाद्धि रसास्वादवित्प्रमाता यथार्थरसतत्त्वबोद्धा तत्त्वप्रमोषात्तद्भावव्यपगमात्परिमुषितपरिमितप्रमातृभावादिति भावः । हीति हेत्वर्थकम् । अपि च तन्मयाकारभानतो रसाकाराकारितचित्तवृत्तितो रसोऽहमित्याकारानुभवाद् विगलितवेद्यान्तरत्वाच्चेति हेतुद्वयेन तस्य निर्वाच्यत्वं निषिद्धं भवतीति बोध्यम् । विभावादेस्तु न तत्त्वमिति ब्रह्मवदनिर्वाच्यत्वं नेति बोध्यम् ।

**तन्मयीभावनैवैषा भाव्यभावकयोगजा ।**
**रसावस्थेतिसंज्ञातः प्रमातृष्ववधीयते ।। ३८ ।।**

तन्मयीति । तन्मयी रसनास्वादनाह्लादनिर्वृतिसुखादिरूपा एषा यथानिर्दिष्टा भावना भाव्यमानाकारा पुनः पुनरनुसन्धानात्मिका वासनापरपर्यायाऽनुभूत्याकारेण प्रतीयमाना भाव्यभावकयोगजा—भाव्यं रत्यादिकम्, भावकः सचेताः तदास्वादबोधसामर्थ्यशाली सहृदयस्तयोर्योगः सम्बन्धो भाव्यत्वेन भावकत्वेन च संसर्गः, तज्जनिता रत्यादिसहकृतास्वादबोद्धृसंयोगानुकूलवृत्तिमती रसावस्था तदास्वाददशा रसोऽहमित्याकाराकारितेति संज्ञातो नाम्ना प्रमातृषु तद्यथार्थतत्त्वज्ञातृषु अवधीयते पर्यवस्थाप्यते सावधि कल्प्यते तस्यास्तत्समावधिकत्वादुपन्यस्यत इत्यभिप्रायः । तेन तन्मयीभावना भाव्यभावकयोगजनिता प्रमातृगता रसावस्थेति संज्ञां लभते । वस्तुतस्तु भा यं भावको भावना रसावस्थेति मिथो नानाव्यपदेशभाक् समूहालम्बनत्वेन रसास्वादनिर्विशेषेण पर्यवसीयत इति बोध्यम् ।

**भानात्तज्ज्ञानमासाद्य व्यपदेशो रसस्य यः ।**
**तत्र तस्य पृथग्भावादिन्द्रियार्थप्रयोजनम् ।। ३९ ।।**

भानादिति । भानमनुभूतिलक्षणं रसास्वादक्षणमात्रस्थायि सहृदयैकसंवेद्यं तन्मयीभवनमित्युच्यते । तादृशतद्भानादनन्तरं स्वस्थितिबोधे जातै रसावस्थातः प्रमातृत्वेनावस्थाने ज्ञानमासाद्य अहमस्मीत्याकारकमधिगम्य रसस्यास्वादजीवातो

रस्यमानस्वरूपस्य यो व्यपदेशो व्यवहार उपचारोऽभिधाननिर्देशो वा लोकोपयोगाय शास्त्रस्थितिस्थापनाय च भवतीति शेषः।

तत्र तादृशव्यपदेशे तस्य रत्यादिभावात्मकस्य रसस्य पृथग्भावात्पार्थक्येन ज्ञायमानत्वात् रत्यादिसम्बन्धानुविधायित्वेन रसशब्देन बोध्यमानत्वाच्च, इन्द्रियार्थ-प्रयोजनम्, रसनश्रवणादीन्द्रियाणां पदार्थोच्चारणश्रवणात्मकफलं सिद्ध्यतीति शेषः। भानात्मत्वेन रसोऽहमित्याकारकतन्मयीभावे तद्व्यपदेशाभावः, रसत्वेन पार्थक्या-भावात् रत्यादिसम्बन्धप्रहाणाच्च। भानान्ते रसत्वज्ञानावस्थायां पृथक्त्वेन तद्बोधे चेन्द्रियार्थसन्निकर्षात्तदर्थप्रयोजनं प्रतिपन्नं भवतीति गूढाशयः।

**भानज्ञानद्वयोद्भूतप्रमाणप्रमितिस्मृतिः ।**
**भावकान्तर्निविष्टोद्यद्रसोद्बोधस्य कारणम् ॥ ४० ॥**

भानेति। भानं तन्मयीभवनं रसानुभवात्मकं ज्ञानं रसत्वव्यपदेशात्मकं तद्द्वये-नोद्भूतं भानज्ञानोभयजनितं यत्प्रमाणं यथार्थबोधकरणं रसमयानुभवसंवित्साक्षिकं तज्जन्यप्रमितिस्तत्त्वप्रपत्तिर्याथार्थ्यरूपा तस्याः स्मृतिः स्मर्यमाणस्वभावा तद्विद्बो-धात्मिका, सेयमेव स्मृतिर्भानज्ञानप्रमाणद्वयप्रतिपन्ना कर्तृरूपा भावकानां सचेतसां रसास्वादमर्मविदामन्तर्मानसे निविष्टस्य वासनात्मतया स्थितस्योद्यद्रसोद्बोधस्य सामग्रीबलात्समुदीयमानरस्यमानस्वरूपास्वादानुभवस्य कारणं हेतुर्भवतीति शेषः।

अयमाशयः—भानात्मकसहृदयानुभवप्रामाण्येन रत्यादिस्थायिज्ञानप्रामाण्येन च यथार्थबोधात्मिका स्मृतिरेव सहृदयहृदयनिष्ठरत्यादिस्थायिव्यक्तीकृतरसोन्मेषनिर्विशेष-प्रत्यायकत्वेन तत्कारणं परिकल्पते, तेन तत्र सहृदयविद्वदुभयप्रामाण्यमवगन्तव्यम्।

**स्मृतिरेषा रसावस्था चानयोर्नैकरूपता ।**
**हेतुहेतुमतोर्योगात्तद्धेतोस्तत्समुद्भवः ॥ ४१ ॥**

स्मृतीति। स्मृतिः स्मर्यमाणरूपा पूर्वदृष्टविभावादिज्ञानजन्यस्मरणात्मिका, रसावस्था रस्यमानाकारस्वसंवेदनस्वरूपा स्वाभिन्नाखण्डचिदाह्लादमयी च, अनयोः स्मृतिरसावस्थयोरेकरूपताऽभिन्नाकारता न भवतीति शेषः। द्वयोः सुतरां भेदस्येष्यमाण-त्वादिति। प्रत्युतानयोर्हेतुहेतुमतोर्योगः, स्मृतिहेतू रसावस्था च हेतुमत्कार्यावस्थितिः, स्मृतिनिष्ठहेतुजन्या तादृशकार्यरूपा रसावेशदशेति बोध्यम्। तद्योगात्कार्यकारण-सम्बन्धात् तद्धेतोः विभावादिस्मरणात्मककारणात् तत्समुद्भवस्तस्या रसावस्थायाः सम्यगुद्भव उत्पत्तिः कार्यरूपा परिणतिः सहृदयैरनुभूयमाना रसास्वादसम्भूतिः सम्पद्यते।

विभावादेः स्मृते रसानुभूतेः कारणताया अभ्युपगमान्न तयोरेकरूपत्वमिति तात्पर्यार्थः ।

**पूर्वज्ञातस्य संदृष्टिर्मानसी स्मृतिरुच्यते ।**
**तत्क्षणोद्भूत आह्लादश्चमत्कारात्मको रसः ॥ ४२ ॥**

पूर्वज्ञातस्येति । केयं स्मृतिः कश्च रसस्तयोर्विशेषो निर्दिश्यते—पूर्वज्ञातस्य प्रथमदृष्टपदार्थावबोधस्य—'इदमेतदिति तदर्थाभासितप्रत्ययस्येत्यर्थः । संदृष्टिःसत्यवसरे पुनः सम्यग्दर्शनम्, साऽपि तादृशी भूयः संदृष्टिर्मानसी मनसि जायमाना स्मृतिरुच्यते स्मर्यमाणस्वरूपा प्रत्यवगम्यते, अपि च—तत्क्षणोद्भूतो रसानुभवसमकालसञ्जातश्चमत्कारात्मकश्चिदानन्दाकार आह्लाद आस्वादापरपर्यायो लोकोत्तरसुखानुभूतिप्रत्ययश्च रसो ब्रह्मानन्दसहोदरो रस्यमानस्वरूप इत्युच्यते ।

अत्रेदमवधेयम्—पूर्वज्ञातविभावादिवस्तुनो भूयोदर्शनात्मिकायाः स्मृतेर्हेतुत्वं केवलं रत्यादिस्थायिबोधपर्यवसाय्येव पर्यवतिष्ठते न त्वाह्लादात्मनि रसे तत्प्रसरस्तस्य समूहालम्बनात्मतया स्वतः प्रामाण्येन संवेद्यमानत्वादिति बोध्यम् ।

**येन येन च शब्देन संज्ञया वाऽभिधीयते ।**
**तस्य तस्य च वैफल्यं रसानुभवसंविदि ॥ ४३ ॥**

येनेति । येन येन च शब्देन यथा यथा निर्दिष्टेन रसपदेन शृङ्गारादिपदेन वा संज्ञया तदभिधानात्मकद्रव्येण वा येन केनचिद्रूपेण वाऽभिधीयतेऽभिधया वृत्त्या प्रतिपाद्यते—'रसोऽयमिति', रसोऽनुभूयते' 'शृङ्गारादिरयं विलसती'त्याद्यभिधानं क्रियते तस्य तस्य सर्वस्य तादृशशब्दात्मसंज्ञाभिधानस्य च रसानुभवसंविदि रस्यमानाकारमानससाक्षात्कारात्मकचिदाह्लादबोधे वैफल्यं नैरर्थक्यमनुपयोगित्वमनुपादेयत्वं वा भवतीति शेषः ।

यतश्च रसादिशृङ्गारादिसंज्ञाशब्दमात्रोपादाने रसानुभवसंविदभावात्तदनुपादाने केवलैर्विभावादिभिरभिव्यज्यमानैस्तादृशसंविदो जायमानत्वाच्च तत्र तद्वैफल्यं बोध्यम् ।

**इदं तत्त्वमिदं तत्त्वमित्याकारेण केवलम् ।**
**निर्देशमात्रमेवास्य स्वरूपाख्यानवर्त्मनि ॥ ४४ ॥**

इदमिति । इदमिति पुरो निर्दिश्यमानम्, लक्षणीयतावच्छेदकतया प्रतिपाद्यमानं तत्त्वं रसत्वावच्छिन्नम्, तच्च रसपदेन शृङ्गारादिपदेन च द्वैविध्येनाभिधीयमान-

मिदमिदमिति द्विरुक्तिर्बोध्या। तादृशतत्त्वप्रकारकाकारेण शब्दाभिधानसंज्ञारूपेण केवलं तदनुभूतिव्यतिरिक्तमस्य रसस्य निर्देशमात्रं संकेतमात्रमनेन शब्देनानया संज्ञया वा तदर्थबोधो भवत्वित्याकारः केवलः संकेत एव गृह्यते न तु तदाह्लादोऽनुभूयत इत्याशयः।

ननु तादृशाभिधानस्य वैफल्यात् किं तदावश्यकत्वमित्युच्यते—स्वरूपाख्यान-वर्त्मनि तदावश्यकत्वात् तदभिधानं युज्यते। स्वं रसतत्त्वं रूप्यते लक्ष्यत इति स्वरूपम्, लक्षणापरपर्यायम्, तदाख्यानं निर्वचनं तस्य वर्त्मनि मार्गे शास्त्रविहिते पथि तदभि-धानमावश्यकमिति भावः।

**रस इत्यर्थसंवादे विसंवादो विदां हृदि।**
**तदानन्दानुभूतौ स्यात्तदात्मैव तदात्मकः॥ ४५॥**

रस इति। रस्यत आस्वाद्यत इति रस इत्यर्थसंवादे तदर्थबोधानुकूलशब्दाभि-धाने रसत्वविशिष्टार्थसंज्ञोपादाने वा विदां रसमर्मवेदिनां सहृदयानां हृदि मनसि विसंवादो वैरस्यापादकस्तदास्वादविरहाद् भवतीति शेषः। न केवलं रसशब्दस्य तदर्थ-मात्रस्य वा ज्ञानेन (श्रवणेन) सचेतसः सन्तुष्यन्ति—ऋते तन्मयाह्लादानुभवादिति भावः। अथ च तदानन्दानुभूतौ साक्षात्तद्रूपसुखानुभवे तदात्मैव तस्य (रसस्य) आत्माऽऽनन्दमय एव तदात्मक आनन्दलक्षणः स्याद् भवेन्न लक्षणान्तरमिति बोध्यम्।

आनन्दात्मैव रस आनन्दात्मकस्तदानन्दानुभूतौ सहृदयानां हृदि संविभासते न चानन्देतरल्लक्षणं किमपि संगच्छते तत्रेति तात्पर्यमवसेयम्।

**साऽपि नैवाविनाभावात्तत्सत्त्वे तद्भवात्मिका।**
**साधारण्यादभिव्यक्तिः केषाञ्चित्क्वापि जायते॥ ४६॥**

सेति। सेत्यनेन पूर्वप्रक्रान्ता रसानुभूतिर्ग्राह्या, अपीत्यानन्तर्यार्थकम्। अविना-भावो व्याप्तिर्नान्तरीयकत्वम्। तत्सत्त्वे तत्सत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां सा व्याप्तिः पर्यवसीयते। अपि च सा रसानुभूतिरानन्दमात्रपरिच्छिन्ना अविना-भावाद् व्याप्तेस्तत्सत्त्वे (हेतुसत्त्वे) तद्भवात्मिका कार्योत्पत्तिरूपा नैव भवतीति शेषः। एवकारेणान्ययोगव्यवच्छेदात्मको दृढनिषेधो बोध्यः। रत्यादिस्थायिमात्रकार्योत्पत्तौ विभावादिहेतूनां पर्यवसानात्, आनन्दात्मिकायां रसानुभूतौ तेषां व्यभिचारदर्शनाच्चेति ज्ञेयम् ततश्च साधारण्यात्साधारणीकरणव्यापारात् सामान्यान्निर्विशेषाच्च केषाञ्चिद्-वासनावतां सचेतसां तद्विदां क्वापि कस्मिंश्चित्क्षणे वेद्यान्तरशून्ये काले साऽभिव्यक्ति-रभिव्यञ्जनया प्रतिपत्तिर्जायते सम्पद्यते। तादृश्यभिव्यक्तिरेव रसानुभूतिरिति भावः।

**ज्ञप्तिस्मृत्यादिवृत्तीनां गोचरत्वाप्रकाशनात् ।**
**स्वतो भावादियं काचित्क्रिया लोकोत्तरा मता ।। ४७ ।।**

ज्ञप्तीति । ज्ञप्तिर्ज्ञाप्यमानलक्षणा ज्ञानविषया वृत्तिः, अनेन ( दीपादिना ) इदं घटादिवस्तु ज्ञाप्यते बोध्यते ज्ञानविषयीक्रियते वेत्येवंरूपा बोध्या । स्मृतिश्च स्मर्यमाण-लक्षणा पूर्वज्ञातस्य पुनर्दर्शने बुद्धौ तदेवेदमितिस्मरणात्मिका ज्ञानविषयकवृत्त्यन्तरत-योपादेयेति बोध्यम् । आदिपदेन कृतिधृत्यादिग्रहणम् । एवमादीनां वृत्तीनां बुद्धिव्यापार-स्वरूपाणां गोचरत्वाप्रकाशनाद् गोचरत्वेन विषयत्वेन ज्ञानेन्द्रियसाध्यत्वेन चा-प्रकाशनादनभिव्यञ्जनादप्रतीतेरास्वादसुखानुभूतित्वेन मानसप्रत्यक्षाभावाच्चेत्यर्थः । अपि च स्वतोभावात्स्वेतरनैरपेक्ष्येण सम्भवात् स्वतः प्रमाण्यवेद्यत्वाच्चेयं रसानुभूतिः काचिद् वागगोचरा सहृदयैकसंवेद्या लोकोत्तरा लोकात्सामान्यजगत उत्तरवर्तिनी सहृदयजनानुवर्तिनी च मता स्वीकृताऽऽलङ्कारिकैराचार्यैरिति भावः ।

**वासना प्राक्तनी पुष्टा तथेदानीन्तनी द्वयी ।**
**येषामासेदुषी चान्तस्तेषां तद्वेतृवैदुषी ।। ४८ ।।**

वासनेति । वासना, भावना, सस्कारः, स्थायितयाऽन्तःकरणे विद्यमानो भाव-विशेषः । सा च प्राक्तनी पूर्वजन्मोपात्ता, पुष्टा पुष्टिमधिगता सुदृढा प्रबलप्रत्ययोप-रूढा झटित्युपोद्‌बलनशीला, तथा तद्वदेवान्यूना इदानीन्तनी एतज्जन्मोद्‌गता द्वयी सम्भूय समुदिता न तु तयोरन्यतरा, उभयोः समुदितत्वेनैव तत्र हेतुत्वादिति भावः । अन्यतरस्या अपर्याप्तत्वादित्यवधेयम् । तादृशप्राक्तनेदानीन्तनवासनाद्वयस्य सत्त्वे सहृदयत्वसम्प्रतिपत्तिर्भवतीत्यपि बोध्यम् । इत्थमेतादृशी वासनाद्वयी येषां सचेतसामासे-दुषी चान्तःसन्निविष्टाऽन्तःकरणे स्थायित्वेन निष्ठिता भवतीति शेषः । तेषां पूर्वा-द्यतनपुण्यशालिनां प्रमातृणां काव्यवैदुष्यवेदिनां सहृदयानां तद्वेतृवैदुषी रसबाधनैपुणी रसानुभूतिवेपश्चिती रसतत्त्वाधिगमानुभवोभयज्ञानयोग्यताशालिकौशलमस्तीति भवतीति वेति शेषेण पूरणीयम् ।

**सर्वे भावास्तथा सर्वा वृत्तयः काव्यसङ्गताः ।**
**रसालम्बनतां यान्ति विभावादिसमूहिताः ।। ४९ ।।**

सर्व इति । सर्वे यावन्तो दृश्यमाना येन केनापीन्द्रियेण ज्ञायमाना सकलप्रमाण-वेद्या भूतवर्तमानभविष्यदन्विताश्च भावाः पदार्था जातिगुणक्रियाद्रव्यात्मकाः, तथा तद्वदेव सर्वाः समग्रास्तत्तदखिलभावविषयानुकूला वृत्तयो व्यापाराः क्रियारूपाः काव्य-सङ्गताः कविकर्मवर्णनानुकूलव्यापृतिसम्बन्धनिबद्धा यदि भवेयुस्तदा विभावादिसमू-

हिता विभावानुभावव्यभिचारिसमूहतयोदिता रसालम्बनतां रसाश्रयतां तद्‌विभावतां वा यान्ति तत्त्वेन प्रतिभान्ति ।

अयमाशयः—लोके यानि कारणकार्यसहकारीणि निगद्यन्ते तान्येव काव्ये विभावनादिविशिष्टक्रियया विभावानुभावव्यभिचारिरूपेण परिणमन्ति, तत्समूहालम्बनतया रसाश्रयतां ( रसमयताम् ) प्रतिपद्यन्ते "तदात्मैव तदात्मकः" इति पूर्वोक्तेः ।

**समूहालम्बनात्माऽयं काव्यात्मा सात्त्विको रसः ।**
**चिदानन्दस्वरूपेणास्वादमात्रप्रमात्मकः ॥ ५० ॥**

समूहालम्बनात्मेति । समूहस्य विभावादेरालम्बनमाश्रय आत्मा स्वरूपं यस्य तादृशः, अथवा समूह एवालम्बनमाश्रयो यस्यात्मा लक्षणमित्याकरकोऽयमास्वाद्यमानानन्दमयो विगलितवेद्यान्तरः, काव्यात्मा कविवर्णनाव्यापारस्य गद्यपद्यात्मकस्य कविकर्मणः काव्यस्यात्मा जीवातुर्जीवनाधायको लोकोत्तरः सात्त्विकः सत्त्वोद्रेकादास्वादविषयीक्रियमाणत्वाद् रजस्तमोभ्यामस्पृष्टे मानसे प्रतीयमानात्वाच्च सात्त्विकः सत्त्वगुणोद्‌भवो रसः, चिदानन्दस्वरूपेण चिच्चैतन्यं तदानन्दस्तन्मयाह्लादस्तद्‌रूपेण चेतनात्मकनिर्वृतिमयाकारेणास्वादमात्रश्चर्वणासमकालिकसंवेद्यत्वात्तावन्मात्रसत्ताकश्चासौ प्रमात्मको यथार्थानुभवप्रमितः, सहृदयैः साक्षान्मानसप्रत्यक्षीक्रियमाणत्वात्, स्वतः प्रमाणवेद्यत्वात्, श्रुतिप्रतिपाद्यत्वाच्च तत्प्रमात्वमसंदिग्धं सिद्धयतीति भावः ।

तेन समूहालम्बनात्मत्वविशिष्टकाव्यात्मत्वविशिष्टसत्त्वोद्रिक्तचिदानन्दाकारास्वादैकप्रमाविषयत्वं रसत्वमिति लक्षणं पर्यवस्यतीति बोध्यम् ।

**पूर्वाचार्यविचार्यमाणसरणिश्रेणीकृतात्मोदिता-**
**भिप्रायप्रतिविम्बितं मतमिदं व्यक्तीकृतं यन्मया ।**
**वृत्त्याकारितकारिकोद्‌गतपथोद्दिष्टं तदेतत्सुधी-**
**साहित्यागममर्मवित्सुमनसः पश्यन्तु तुष्यन्तु च ॥ ५१ ॥**

**रससूत्रोद्‌गतान् वादान् दूरमुत्सृज्य केवलम् ।**
**स्वरूपास्वादनिष्पत्तिप्रकारोऽत्र प्रदर्शितः ॥ ५२ ॥**



# काव्यस्वरूपविमर्शः

किं काव्यं तत्स्वरूपं च किमिति जिज्ञासायां किमपि स्वोपज्ञभानं निरूपयितु-मुच्यते—

**कविकर्मतया ख्यातं काव्यं यत् कवृधातुजम् ।**
**तत्स्वरूपमथैकान्तं काव्यत्वमिति सुस्थिरम् ॥ १ ॥**

**काव्यत्वे तत्र शब्दार्थगुणालङ्कारवृत्तयः ।**
**औचित्यरीतिवक्रोक्तिदोषाभावादिसंस्थितिः ॥ २ ॥**

अथ कवृधातोर्निष्पन्नस्य काव्यशब्दस्य कविकर्मत्वेन ख्यातेः कविनिष्ठकर्तृता-निरूपितकाव्यनिष्ठकर्मत्वावच्छिन्नत्वं काव्यत्वमिति तल्लक्षणं सङ्गच्छते। तस्य काव्यस्य स्वत्वनिरूपकमेकान्तमव्यभिचारि काव्यत्वावच्छिन्नं स्वरूपं सर्वसम्मतं सुस्थिरीभवतीति तत्र चैतस्मिन् काव्यत्वे कविकर्मत्वलक्षणे सौस्थैर्यमापन्ने पुनरत्र शब्दार्थौ वाच्यवाचकौ गुणा माधुर्यादयोऽलङ्कारा अनुप्रासोपमादयो वृत्तय उपनाग-रिकाद्या औचित्यमुचितभावो रीतयो वैदर्भीप्रभृतयो वक्रोक्तिः सविशेषभङ्गीभणितिः दोषाभावश्च्युतसंस्कृत्यादिदोषराहित्यमादिपदेनान्यानि ध्वन्यादिकाव्यत्वोत्कर्षाधाय-कानि तत्त्वानि संस्थितिं सम्यगवस्थानमश्नुवते, एषां शब्दार्थगुणालङ्कारादीनां तद्धर्मतयोपकारकत्वेनाङ्गीकृतत्वात्तस्य ( काव्यस्य ) धर्मित्वेनोपकार्यत्वादङ्गाङ्गी-भावेन व्यवस्थानाच्च ।

**शरीरत्वेन शब्दार्थौ गुणालङ्कृतयनन्यथा ।**
**काणत्वाद्यतथाभावाददोषत्वमुरीकृतम् ॥ ३ ॥**

**औचित्यरीतिवृत्त्याद्या उपस्कर्तुं च सङ्गताः ।**
**रसात्मत्वेन काव्यत्वे तद्धेतौ तत्स्वरूपता ॥ ४ ॥**

---

१. "शब्दार्थौ सहितौ काव्यम्"—॥भामहः॥ का० सू० १, १६
२. "काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते" । वामनः १.१ ॥
३. "शब्दार्थौ काव्यम्" ॥रुद्रटः–का० २, १ ॥
४. अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम् ॥ हेमचन्द्रः ६ ॥

ननु "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इत्यादि प्राचामाचार्याणां मतानुरोधाद् विशिष्टशब्दार्थोभयनिष्ठस्वरूपवैशिष्ट्येनैव काव्यत्वं लक्षणानुगतमित्यस्याङ्गीकर्त्तुमुचितत्वादिति चेन्न, तस्य "रसो वै सः" रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति श्रुत्युक्तवचनप्रामाण्याद् रसात्मतया तदङ्गित्वेन चाङ्गीकृतत्वेन शब्दार्थगुणालङ्कारादीनामङ्गत्वेन च तत्त्वेन तदेकान्तस्वरूपनिर्वचनस्यासम्भवात्तदङ्गत्वापत्तेश्च। शब्दार्थौ शरीरम्, गुणाः शौर्यादिवत्, अलङ्काराः कटकादिवदनन्यथा याथार्थ्येन शरीरत्वगुणत्वालङ्कारत्वादिधर्मानुसारेण तत्र धर्मिणि काव्येऽङ्गत्वेनान्वेतुमुपयुज्यते, न तु तत्त्वेन (काव्यत्वेन) निरूप्यन्ते। तस्माद् रसत्वे रसात्मकत्वे वा काव्यत्वमिति श्रुत्युक्तलक्षणलक्षितकाव्यहेतुत्वेन तस्य काव्यस्य स्वरूपत्वमविनाभावसम्बन्ध्यनुबन्धि प्रतितिष्ठतीति।

**शब्देऽप्यर्थेऽपि पार्थक्यादैक्याद् वा काव्यता मता।**<br>
**उपचारतया साऽस्तु न तत्र परमार्थता॥ ५॥**

**शरीरेऽप्युपचारत्वाद् यथाऽऽत्मत्वनिदर्शनम्।**<br>
**तथा शब्दार्थयोर्निष्ठं काव्यत्वमुपचर्यते॥ ६॥**

"रमणीयार्थप्रतिपादकः शब्दः काव्यमिति. शब्दमात्रनिष्ठकाव्यत्ववादिनां पण्डितराजप्रभृतीनां मतमनुसृत्य शब्दे अपिद्वयं काव्यत्वसमुच्चायकत्वेन शब्दार्थयोः प्रकारीभूतम्, तेन अर्थविशिष्टे शब्दे, शब्दविशेष्यकेऽर्थे चेति पार्थक्यात्, शब्दप्राधान्येनार्थप्राधान्येन च तयोः (शब्दार्थयोः) ऐक्याच्छब्दार्थोभयप्राधान्येन वा काव्यता शब्दार्थद्वयनिष्ठकाव्यत्वाभिधायिनां श्रीमन्मम्मटादीनां सम्मता च प्रतिपादिता। सा शब्दमात्रे शब्दार्थोभयगता च काव्यता पार्थक्यापार्थक्येनाङ्गीकृता उपचारतयोपचरितारोपितधर्मतया तत्र काव्यतोपतिष्ठते, न तु परमार्थतस्तत्त्वार्थसार्थक्यात् रसात्मभावेन पर्यवस्यतीति बोध्यम्।

यथा हि शरीरेऽप्युपचरितधर्मत्वेनात्मत्वव्यवहारः, यथा वाऽन्येष्वङ्गभूतेषु मनआदिषु तत्त्वप्रख्यापनम्, तथैव शब्दार्थनिष्ठं काव्यत्वमुपचर्यते, तदारोपात्तद् व्यवह्रियत इति तदप्यविरोधि काव्यत्वबोधौपयिकबुद्धिवैशद्यायेति नोक्तशब्दमात्रशब्दार्थोभयगतकाव्यत्वलक्षणकृतां प्राचामाचार्याणां सिद्धान्तक्षतिरिति समास्थेयम्।

**यद् ब्रह्मानन्दसोदर्यसामरस्याद् रसात्मता।**<br>
**काव्यस्य प्रथिता तत्र विभावादिनिबन्धनम्॥ ७॥**

---

५. "शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ च काव्यम्।" ॥ वाग्भटः। ४।

६. "गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ" (काव्यम्)—विश्वनाथः॥

७. शब्दार्थौ वपुरस्य तत्र विबुधैरात्माऽभ्यधायि ध्वनिः॥ विद्याधरः॥

**आनन्दत्वेन तद्रूपो भावत्वेन च सोदरः ।**

**लौकिकालौकिकत्वेनोभयत्वं तद्रसात्मनः ॥ ८ ॥**

यद्धि यस्माद्धेतोर्ब्रह्मणोऽनिर्वचनीयरूपाचिन्त्यचिदात्मस्वरूपस्य श्रुत्युक्तमहावाक्योदितस्य निषिध्यमाननिखिललक्षणालक्षितस्य सत्त्वेनानुभूतिमात्रगम्यचिदंशनिरूपितयत्किञ्चिन्मात्रतदाकारप्रकारस्य परात्परतरस्येदन्त्वेन निर्दिश्यमानस्य चास्य परमात्मन आनन्दात्मकस्य सतः सोदर्यसामरस्यात्सादृश्यव्यपदेशविशेषादेव रसात्मता रस्यमानस्वरूपमात्रपरिच्छिन्नस्यानन्दाह्लादनिर्वृतिजीवातुसुखादिनानापदप्रतिपाद्यमानस्य परमार्थभूतस्य परिमुषितपरिमितप्रमातृभावानुभूतिमात्रवेद्यस्य विगलितवेद्यान्तरचिदनन्तसुखास्पदस्य विभावादिसमूहालम्बनत्वेन समुदितस्वभावानुभाव्यभानस्य चर्वणैकसर्वस्वस्वादरूपगोचरीक्रियमाणस्य सहृदयजनमनःप्रतिष्ठितस्यास्य रसस्यात्मता स्वरूपता लक्ष्यतावच्छेदकतया काव्यस्य कविकर्मधर्मानुबन्धिनः प्रथिता प्रथमानतया प्रसिद्धिं गता पर्यवतिष्ठते। तत्र तादृशोक्तरसात्मत्वे विभावादिनिबन्धनम्—"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतसूत्रोक्तानुसारं विभावाद्यप्रहाणं हेतुरिति ज्ञेयम्। अतश्चानन्दत्वेनाह्लादरूपतया तद्रूपो ब्रह्माकारो रसः, "आनन्दो वै ब्रह्म" इति श्रुत्युक्तेः। भावत्वेन विभावसञ्चार्यादिभावभूयिष्ठत्वेन तत्समूहालम्बनात्मतयाऽनुभूतिगम्यत्वेन च सहोदरो ब्रह्मानन्दस्य सादृश्यस्वरूपः पर्यवतिष्ठते, तथात्वे च लौकिकत्वेनोभयथा तस्य काव्यस्यात्मभूतस्य रसस्य काव्यत्वेन स्वरूपावस्थानं निर्वक्तुमुपयुज्यते।

**यत्प्राधान्येन तद्रूपं जायते कविकर्मणा ।**

**तेन तद्व्यपदेशः स्याच्छब्दार्थोभयनिष्ठितः ॥ ९ ॥**

**शब्दः स्फोटात्मको नित्यस्तदर्थोऽनित्य उच्यते ।**

**नित्यानित्यतया काव्ये तद्द्वयापत्तिरिष्यते ॥ १० ॥**

"प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन यस्य शब्दस्यार्थस्य शब्दार्थयोरलङ्कारादेर्वा प्राधान्येन वर्णनानिरूपणप्रधानभावेन तद्रूपं तस्य काव्यस्य रूपमवस्थानं लक्षणं कविकर्मणा कविकर्तृतानिरूपितकर्मत्वानुरूपप्रकारेण जायते, तेन "शब्दप्रधानं काव्यम्," "अर्थप्रधानं काव्यम्," "अलङ्कारप्रधानं काव्यम्,"

---

८. "वाक्यं रसात्मकं काव्यम्" ( विश्वनाथः--सा० द० १ परि० )

९. रमणीयार्थप्रतिपादकः शब्दः काव्यम् ( पण्डितराजः र० गं० )

१०. शब्दार्थाविव सम्पृक्तौ" ॥ कालिदासः–र० वं० १ ॥

"ध्वनिप्रधानं काव्यम्" इत्यादि नैकविधः तद्व्यपदेशः काव्यस्य व्यवहारः शब्दार्थोभयनिष्ठितः शब्दगतोऽर्थगतस्तदुभयगतश्च स्यात्सम्भवितुमर्हति।

किञ्च यदि 'शब्द एव काव्यम्' आहोस्विदर्थ एव काव्यम् किं वा शब्दार्थयोः काव्यम्, चेत्यादितल्लक्षणे एकान्तेन स्वीक्रियमाणे वर्णपदवाक्याद्यष्टविधः स्फुटदर्थ-प्रत्यायकः स्फोटात्मकः शब्दो व्याकरणनयस्मृत्या नित्यः, तत्प्रतिपाद्यो घटपदादि-रूपोऽर्थश्चानित्य इत्युच्यते, तदत्र तल्लक्षणस्य काव्यस्य शब्दार्थगतत्वेन नित्यत्व-मनित्यत्वं तदुभयत्वं वेत्यापत्तिरिष्यते—इष्टानिष्टापत्तिरुज्जृम्भते काव्यत्वतदात्मत्व-लक्षणकोटाविति तदुभयनिरासेन रसात्मत्वविशिष्टं कविकर्मत्वरूपं काव्यमित्येव तस्य-स्वरूपं कव्यभिन्नकर्मधर्मात्मकस्य काव्यस्य सङ्गच्छते।

ननु 'रसस्तु स्वप्नेऽपि न वाच्य' इत्युक्ते तन्नाम्ना तदुक्तिर्दोषावहेति चेत्तदा माऽस्तु तदभिधानं काव्यलक्षणघटकम्, काव्यात्मत्वेनैव तदुपादानस्य सौकर्यात् "तदात्मत्वविशिष्टं तत्त्वमिति वक्तुं सुवचत्वाच्च। यदि वा केवलः शब्दः केवलोऽर्थो वा न काव्यलक्षणघटकीभूतः समुपात्तः, प्रत्युत निर्दुष्टसगुणालङ्कारसंसर्गविशिष्टस्त-थात्वेन प्रतिपन्नस्तेन तस्य स्फोटात्मकत्वे नित्यत्वप्रसक्तिरर्थरूपत्वेनानित्यत्वप्रसक्तिर्नेति चेन्न, अथापि तस्य स्फोटात्मकत्वं दुर्वारम्, अर्थरूपत्वेऽनित्यत्वमप्यनिवार्यमिति नित्यत्वानित्यत्वेन यौगपद्येन शब्दार्थनिष्ठकाव्यलक्षणमाक्रान्तं भवतीति शङ्का कुलिश-कीलायिता तिष्ठतीति।

**स्वयम्भूकविरेकोऽसौ परिभूय मनीषया।**
**काव्यमातनुते किञ्चिद् लोकोत्तरमनुत्तमम्॥ ११॥**
**तदालोकवशाल्लोके कविकर्म प्रशस्यते।**
**तद्वत्तल्लक्षणं तस्मात्काव्यत्वस्य प्रमापकम्॥ १२॥**

"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्, कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इतीशावास्योपनिषदुक्त-मन्त्रवर्णानुरोधात् स्वयम्भवनशीलः प्रातिभप्रकाशप्रशस्तात्मप्रभावभास्वरो मनसः हीशिता मनीषी भूतवर्तमानभविष्यद्द्रष्टा स्वीयप्रज्ञया नवनवोन्मेषशालिन्या प्रतिभया परितः समन्ताद् भूत्वा परिव्याप्य लोकोत्तरवर्णनानैपुण्येनासौ जगद्विश्रुत एकोऽ-द्वितीयसंख्यावान् कविः क्रान्तदर्शी सर्वदृक् किमपि लोकोत्तरं चमत्कारजनकमनुत्तम-मुत्तमोत्तमञ्च काव्यं स्वकर्तृताविशिष्टं कर्मातनुते प्रसारयति, स च कविः साक्षात्पर-मात्मप्रकाशप्रभवः प्रतिष्ठते, तदस्य काव्यमपि तादृशमेव प्रकर्षोत्कृष्टं सम्पद्यते, तेन

११. "शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते" माघः द्वि० स०॥
१२. "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" दण्डी-का० द०॥

केनचिदेकदेशीयेन लक्षणेन तल्लक्षयितुमशक्यमेव स्यादिति यावन्ति तल्लक्षणानि कृतानि तानि सर्वाण्यपि मतभेदभिन्नानि नैकमत्येनाभ्युपेतानि प्रतीयन्ते। ततश्च कविकर्तृककर्मतया स्वात्मविशिष्टतया लोकोत्तरवर्णनपरतया च काव्यत्वमभ्युपेतव्यमशेषलक्षणलक्षितमित्याकूतं बोध्यम्।

तादृशस्वयम्भूकवित्वप्रतिभानं प्रकृष्टप्रभावभाविताखिललोकस्य कवेः परात्मशालिनो य आत्मोक्तः काव्यप्रतिभायास्तद्वशात्तदनुरोधात्तत्कविकर्म काव्यं लोके प्रशस्यते सर्वलक्षणाजुष्टं सर्वतोभावेन निर्दुष्टञ्चेति तत्र प्रशस्यते प्रशस्तिभाजनतां प्राप्नोति। अपि च तस्मादुक्तहेतोः सत्त्वात् तद्वदेव यादृगेष कविस्तादृगस्य तदुक्तलक्षणं कविकर्मतानुरूपस्वरूपभाक् काव्यत्वप्रमापकं तत्कृतलोकोत्तरकाव्यत्वयथार्थबोधकं भवतीति। यादृशः कविस्तादृशं काव्यमित्यर्थादूह्यम्। तत्र काव्यत्वसामान्यं शब्दार्थनिष्ठं शब्दमात्रनिष्ठं वा गुणालङ्कारादिविशिष्टं तदेकदेशीयलक्षणाक्रान्तं परमार्थतो न काव्यत्वसमग्रस्वरूपप्रत्यायकं पर्यवस्यतीति बोध्यम्।

**यदेकं लक्षणं प्रोक्तं काव्यत्वे तन्न युज्यते।**
**तद्विरुद्धेतरोक्तेश्च प्रत्येकं नाभिसम्मतम् ॥ १३ ॥**
**यथोक्तन्यायतो यावल्लक्षणोच्चय उम्भितः।**
**तावद्रूपतयोपात्तं लक्ष्यमक्षतमुच्चितम् ॥ १४ ॥**

काव्यत्वमुद्दिश्य कृतमेकमपि यल्लक्षणं लक्षणकृतां तदेकान्ततया काव्यत्वे न न युज्यते, युक्त्यन्तरेण तस्य निरस्तत्वात् तत् सर्वव्यापकं न पर्यवतिष्ठते। तदुक्तस्यैकतरस्य लक्षणस्य विरुद्धेतरलक्षणोक्तेः परस्परोपमर्दनादुभयानवस्थानाच्च प्रत्येकं लक्षणं नाभिसम्मतं नाभितः सर्वलक्षणविधायिनां सम्मत्या काव्यस्य लक्ष्यतावच्छेदकतया ग्राह्यं भवतीति।

अतश्च यथोक्तन्यायतो "यत्प्राधान्यं तेन व्यपदेशः" प्राधान्येन व्यपदेशा भवन्ति इति शब्दप्राधान्ये शब्दनिष्ठत्वमर्थप्राधान्ये तद्गतत्वमेवमन्यप्राधान्ये तदन्तरितत्त्वं काव्यस्याङ्गीकार्यमिति तात्पर्यं पर्यवस्यति। ततश्च यावाँल्लक्षणोच्चयस्तत्तत्काव्यलक्षणकृतामुम्भितः कल्पितस्तावतः समग्रस्य रूपतया प्रकारभेदेन निरूपणविशेषतयोपात्तं तत्तदेकदेशीयलक्षणतया परिकल्पितं लक्ष्यं काव्यमक्षतं निर्दुष्टमुच्चितमुच्चीयमानं प्रत्येतव्यमिति।

---

१३. "काव्यस्यात्मा ध्वनिः" ॥ आनन्दवर्धनः ॥ ध्व० ॥

१४. "शब्दार्थौ शरीरम् संस्कृतं मुखम्" इत्यपि राजशेखरः ॥

**विधायैकं निषिध्यान्यल्लक्षणानामवस्थितिः ।**
**लक्ष्यमेकं तु निर्दुष्टं लक्ष्यत्वान्नोभयात्मकम् ।। १५ ।।**

**लक्ष्यत्वे लक्षणाक्रान्तिः कियदंशेऽभिजायते ।**
**इत्येतद्दूषणं तत्र लक्ष्ये नैव प्रसज्यते ।। १६ ।।**

विध्युपयोग्येकं विधेयं वस्तु विधाय विधिना निर्दिश्य विधेयतावच्छेदककोटौ निवेश्य चान्यद् विध्यतिरिक्तं तत्त्वानवच्छिन्नं निषिध्याविधेयतया निरस्य निषेधतावच्छेदकतया प्रतिक्षिप्य च लक्षणानां लक्ष्यमाणवस्तुस्वरूपनिरूपकाणां लक्ष्यलक्षकभावनिबद्धानां लक्ष्यतावच्छेदकत्वेन व्यवस्थापितानामव्याप्त्यतिव्याप्त्यसम्भवादिदोषत्रयराहित्येन यथायथं प्रतिपादितानां स्वरूपतयाऽऽख्याताना ञ्चावस्थितिरवस्थानं सर्वत्र दृश्यते। तत्र यावन्ति दूषणानि वादिप्रतिवादिदत्तानि सम्भवन्ति तानि तत्रैव लक्षणेषु युज्यन्ते लक्ष्यन्तु स्वस्मिन् सर्वथा निर्दुष्टं लक्ष्यत्वेन तदेकं निर्दिष्टं तिष्ठति, तस्य लक्ष्यत्वादेव गोचरीक्रियामाणत्वात्। अपि च नैकविधलक्षणलक्षितस्यापि तस्यैकत्वेन लक्ष्यत्वेन चात्ममात्रपरिच्छिन्नस्वरूपतया विद्यमानत्वात् तल्लक्ष्यं नोभयात्मकं विधिनिषेधोभयस्वरूपम्, विधित्वनिषेधत्वोभयस्य लक्षणमात्र एव प्रवृत्तत्वाल्लक्ष्यस्य तदुभयासंसृष्टत्वाच्च ।

अतएव लक्ष्यत्वे सत्येव लक्षणाक्रान्तिस्तत्सम्बन्धनिबन्धनतया कियदंशे लक्ष्यस्य कियन्तमंशमभिव्याप्य प्रभवति कियन्तमंशमपोह्य व्यभिचरद्रूपतयाऽभिजायत इत्येतल्लक्षणाक्रान्त्यनाक्रान्तिप्रकारकं दूषणमव्याप्त्याद्यभिधानं सत्तत्र लक्ष्ये स्वात्ममात्रपर्यवसन्ने नैव प्रसज्यते प्रसक्तिमभिप्रैतीति लक्षणस्यैवाव्यापकत्वं न तु लक्ष्यस्येति तात्पर्यमवसीयते।

**स्वरूपासिद्धिदोषत्वाल्लक्षणे व्यभिचारिता ।**
**सिद्धलक्ष्यं स्वतः सम्यक् यत्किञ्चिल्लक्षयेदिदम् ।।१७।।**

**यदि पूर्णतया तस्य लक्षणीयत्वमुन्नयेत् ।**
**तदेकस्मिन् स्थिते तस्मिन् तदन्यन्न प्रकल्पयेत् ।।१८।।**

स्वं वस्तुतत्त्वं रूप्यत इति स्वरूपं लक्षणं लक्ष्यलक्ष्यकसम्बन्धात्मकं स्वत एव द्विष्ठतया नैकनिष्ठत्वाद् वस्तुतत्त्वमात्रगतत्वाभावेन पूर्णतस्तन्निरूपयितुमशक्यतया

१५. "शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।" ।। कुन्तकः ।।

१६. औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्" ।। क्षेमेन्द्रः, औ० ।।
इत्येवमादीनि बहुविधानि काव्यलक्षणानि तत्र तत्रोक्तानि ।

स्वरूपासिद्धिदोषग्रस्तत्वाच्च लक्षणेषु व्यभिचारिता व्यभिचरितधर्मिता प्रसक्ता। तादृशव्यभिचरितलक्षणं यत्किञ्चिन्मात्रमंशतश्च स्वतः सम्यक् सिद्धलक्ष्यं सर्वलक्षण-समन्वयान्वितं लक्ष्यतोपात्तस्वात्मरूपं लक्षयेल्लक्षणविषयीकर्तुमर्हेदिति।

यदि वा पूर्णतया सामग्र्येण वस्तुस्वभावसर्वस्वसमुपस्थापकत्वेन वा तस्य लक्ष्यस्य लक्षयितुमुद्दिष्टस्य पदार्थस्य काव्यादेर्लक्षणीयत्वं लक्षणीयतापादकत्वं लक्षण-करणयोग्यत्वञ्चोन्नयेदुन्नेतुं कल्पनया विधातुमिच्छेत्तदा तस्मिन्नेकस्मिन् लक्षणे स्थिते ततो लक्षणादन्यल्लक्षणं न प्रकल्पयेदवधारयेत्प्रकृष्टतया प्रदर्शयेद् वा कश्चिदन्यो लक्षणकारः। स्वेतरलक्षणनिरसनचिकीर्षयैव लक्षणान्तरस्य प्रकल्पित-त्वाल्लक्षणानामेव दोष इत्यास्थेयम्।

**लक्षणानर्हतायां तु लक्ष्यमित्यप्यनर्हकम्।**
**लक्ष्यलक्षकसम्बन्धाल्लक्ष्यत्वमिति युज्यते ॥ १९ ॥**

**सामान्येन विशेषेण चैतल्लक्ष्यव्यवस्थितिः।**
**लक्षणाक्रान्तलक्ष्यत्वं नामसार्थक्यमुह्यते ॥ २० ॥**

ननु लक्षणस्यानर्हतायां लक्ष्यव्यापकत्वेन तत्प्रवृत्त्ययोग्यतायां सत्यां लक्ष्यं लक्षयितुमुद्दिष्टमिति यद् वस्तु तदप्यनर्हकमयोग्यं लक्षणानाक्रान्तत्वादिति वक्तुं युक्तम्। यतश्च लक्ष्यलक्षकसम्बन्धानुविधानादेव लक्ष्यत्वमिति तद्रूपावगमनं कर्तुं युज्यते। लक्ष्यमात्रस्य लक्षणलक्षणीयत्वात् तद्विना तथात्वेनाज्ञातत्वाच्च। सामान्येन सम्बन्धेन विशेषेण वा योगेन चैतस्य लक्ष्यस्य व्यवस्थितिर्लक्षणाधीनैव शास्त्रेषु सम्भवति, तदभावाच्च तदव्यवस्थानात्। यतश्च लक्षणाक्रान्तत्वेनैव लक्ष्यस्य लक्ष्यत्वनामसार्थक्यमुह्यते कल्प्यते तर्क्यते वा—"लक्षणलक्षितं लक्ष्यमिति सिद्धान्तस्य सर्वसम्मतत्वादिति चेत् सत्यम्।"

**लक्ष्यत्वे लक्षणस्योक्तिः कामं स्यात्पारिभाषिकी।**
**लक्षणानर्हता तत्र पूर्णाभिव्यक्त्यभावतः ॥ २१ ॥**

**स्वप्रकाशमनायासं वस्तुतत्त्वमनाविलम्।**
**लक्षणात्तस्य निर्देशः पारिशेष्यान्निवार्यते ॥ २२ ॥**

लक्ष्यत्वे सति लक्षणस्योक्तिः प्रसक्तिर्वा कामं पारिभाषिकी परिभाषामात्र-सम्बद्धा स्यान्नाम, किन्तु तत्र वस्तुनि पूर्णाभिव्यक्त्यभावात् तस्य समग्रतया प्रकाशनाशक्यत्वाच्च लक्षणानर्हतोक्ता, लक्षकत्वसम्बन्धमात्रद्योतकत्वाल्लक्षणमुप-युज्यते। न तु लक्ष्यस्य पूर्णाभिव्यक्तिसामर्थ्यसंवलितत्वादिति भावः। यतो हि

वस्तुतत्त्वमनाविलं परमार्थतो निर्दुष्टं सत्त्वेन चानायासं लक्षणमन्तरा स्वप्रकाशं स्वतः प्रकाशमानं स्वभावपरिज्ञेयं भवति, तेन कस्माच्चिदपि लक्षणात्तस्य लक्ष्यस्य निर्देशः संकेतः पारिशेष्यात्परिशेषभावतः सामग्र्येण नेति तन्निवार्यते। तस्यांशत एव तत्संकेते शक्तत्वान्न तल्लक्ष्यं पूर्णमुन्मीलयितुं लक्षणं शक्नोतीति तात्पर्यम्।

**तद्वल्लक्ष्यमिदं काव्यं स्वत्वेनैव परिस्फुरत्।**
**लक्षणैर्लक्षितं सर्वैस्तत्तदंशावभासकम्॥ २३॥**

**काव्यत्वं कविकर्मत्वे रसात्मत्वविशेषितम्।**
**लक्ष्यत्वस्वार्थसार्थक्यात्स्वत एव प्रकाशते॥ २४॥**

यथोक्तलक्ष्यलक्षकसम्बन्धोपात्तलक्षणानुसारं तद्वदेव लक्ष्यमालक्ष्य समग्रतया लक्षणानर्हत्वे लक्ष्यमिदं काव्यमपि स्वत्वेन काव्यत्वेनैव परिस्फुरत् परिस्फूर्तिमुपगच्छत् प्रतिभानप्रतीतिपथमवतरत्प्रज्ञाप्रकाशमासादयच्च सर्वैर्लक्षणैर्लक्ष्यतोपस्थापनपरकैर्लक्षणत्वधर्मवद्भिः सद्भिर्लक्षितं लक्षणविषयीकृतं सदेतत्तत्तदंशावभासकं तस्य तस्यांशस्य यावल्लक्षणं लक्ष्यमाणस्यावभासकं बोधकं प्रत्यायकं वा भवति। न तु सर्वांशमात्रस्य। सर्वांशस्य लक्षणालक्षणीयत्वात्। अतश्च कविकर्मत्वे कविकर्मतया निरूपितत्वे रसात्मत्वविशेषितं रसात्मत्वविशेषतोऽपश्लिष्टं काव्यत्वं स्वत्वस्य लक्ष्यत्वस्य स्वार्थसार्थक्यात् स्वनिष्ठरसात्मत्वविशिष्टकाव्यत्वफलवत्त्वात् स्वत-एवान्ययोगव्यवच्छेदेन निरपेक्षं काव्यत्वमात्रपरिच्छिन्नं प्रकाशते गोचरीभवति सहृदयहृदयानुभूतिसाक्ष्यलक्ष्यीकारेण प्रकाशेन साक्षात्कारपदवीमारोहतीति भावः।

**नैरर्थक्यं न विज्ञेयं लक्षणानां पृथग्विधौ।**
**यतो वस्तुगतज्ञाने तत्साह्यं प्रतिपद्यते॥ २५॥**

किञ्च नैतावता पृथग्विधौ लक्ष्यव्यतिरिक्तविधानानुसन्धाने सति लक्षणानां मान्यतमप्राचीनाचार्यवर्यकृतानां लक्ष्यानुरोधेन व्यवस्थापितानां तेषां समेषां नैरर्थक्यं पूर्णलक्ष्यलक्षणानर्हत्वाद् वैयर्थ्यं विज्ञेयम्, सर्वाणि लक्षणानि लक्ष्यच्युतानि निरर्थकानीति न बोद्धव्यम्। यतश्च वस्तुगतज्ञाने आब्रह्मनिखिलवस्तुमात्र-मधिगतप्रबोधे तत्साह्यं तेषां लक्षणानां साहाय्यमुपकारकत्वं प्रतिपद्यते प्रतिपदमासाद्यते यावद्वस्तुपरात्मतादात्म्यसमवाप्तिमिति लक्षणकृतां न लक्षणकरणवैयर्थ्यमितिदिगनुसन्धीयते॥

# काव्ये धर्मधर्मिभावविमर्शः

**काव्यार्थदर्शनकृते कवये स्वयम्भू-**
**भूमात्मने परिभुवे च मनीषिणे च।**
**भूयो रसीभवदलौकिककधर्मधर्मि-**
**भावानुभावितहृदे सहृदे नमोऽस्तु ॥**

**धर्मस्य धर्मिणश्चैवं तद्भावस्य व्यवस्थितिः।**
**काव्यसाहित्यसंसर्गात्कीदृशीति विमृश्यते ॥**

अथ कोऽयं धर्मधर्मिभावः काव्यगतः सलक्षणप्रयोजनं प्रतिपिपादयिषितः काव्यतत्त्वविदामभिमतः प्रतितिष्ठतीति निरूपयितुमेतदुच्यते—

**क्रान्तदृष्टेः कवेः सृष्टेः कर्मत्वे काव्यता मता।**
**धर्मधर्मितया तत्र विशेषा विनिवेशिताः ॥ १ ॥**

क्रान्तेति। क्रान्तं पर्यन्तं वस्तुतत्त्वान्तं तदन्तर्निष्ठरमणीयार्थजातमात्रं पश्यति योऽसौ क्रान्तदृष्टिः कविस्तस्य सृष्टिः काव्यात्मिका, तत्कर्मत्वे तत्कर्तृत्वनिरूपितकर्मत्वावच्छिन्ने तत्त्वे काव्यता मता निर्विचिकित्समशेषसम्मतया स्वीकृता, तत्र विप्रतिपत्त्युत्थापनासम्भवात्। तत्र काव्यत्वविशिष्टे कविकर्मत्वावच्छिन्ने काव्ये धर्मतया धर्मितया च तदुभयनिरूपितत्वेन संसर्गेण विशेषा वैशिष्ट्याधायका स्वेतरभेदका विनिवेशिता विन्यासविशेषेण कल्पिताः सन्ति, धर्मधर्मिभावसंसर्गजन्यवैशिष्ट्येन तेषां प्रतिपत्तेः सुकरत्वादिति।

**काव्यं धर्मितयोन्नीतं विशेषाश्च गुणादयः।**
**धर्मत्वेन निवेश्यन्ते तद्वैशिष्ट्यप्रकल्पने ॥ २ ॥**

काव्यमिति। अपि च कविकर्मत्वेनाख्यातम्। रसात्मकं काव्यमेव धर्मितयाधर्मित्वभावापन्नतया स्वाश्रितसकलधर्माश्रयतयोन्नीतमुन्नीय प्रकल्प्य पर्यवस्थापितम्, तस्यैव प्राधान्येन कविप्रतिभानसंरम्भगोचरीक्रियमाणत्वात्कर्मतयोपादानाच्च। पुनश्च

तस्य काव्यस्य वैशिष्ट्यप्रकल्पने उत्तममध्यमत्वादितत्तदनेकभेदप्रयुक्तमाहात्म्यप्रख्यापने गुणादयो माधुर्याद्यलङ्कारीतिवृत्तिप्रभृतयो विशेषा भिन्नस्वरूपास्तत्तल्लक्षण-लक्षिताश्च धारणार्थधार्यमाणार्थोभयसार्थक्येन निवेश्यन्ते धर्मित्वरूपकाव्यसन्निवेश-मापाद्यन्ते रसात्मकस्याङ्गिनः काव्यस्याङ्गभूतत्वेन तेषां धर्मतयोपात्तत्वात्, "ये रस-स्याङ्गिनो धर्माः" इत्याचार्यमम्मटोक्तेश्च ।

**वैशिष्ट्यं तस्य तद्धर्मख्यातिमाश्रित्य तिष्ठति ।**

**तेन नैकविधा भेदाः काव्यस्य परिकल्पिताः ॥ ३ ॥**

वैशिष्ट्यमिति । वैशिष्ट्यं विशेषणताधायकं गुणालङ्काराद्युपबृंहितं तस्य काव्यस्य तद्धर्मख्यातिं काव्यनिष्ठमाधुर्यादिधर्मप्रसिद्धिमाश्रित्याधारीकृत्य तत्तत्प्राधा-न्येन तत्तद्वैशिष्ट्यप्रकल्पनेन तिष्ठति, तत्र तत्र काव्येष्वित्यभिप्रायः । तेन तादृश-वैशिष्ट्यप्रयोजकेन हेतुना काव्यस्य नैकविधा नानाप्रकारका भेदा भिद्यमानस्वरूपाः परिकल्पिताः पारिशेष्यात्कवेः कल्पनया निरूपिताः प्रतीयन्ते, तद्वैशिष्ट्येन तदा-ख्यानादिति भावः ।

**धर्मप्राधान्यतो भेदे धर्मिप्राधान्यमिष्यते ।**

**तयोरेकत्र साम्येन साहित्यं सहभावतः ॥ ४ ॥**

धर्मेति । धर्मा गुणादयः पूर्वोक्ता यत्र प्राधान्यं भजन्ते, तत्र तत्प्राधान्येन हेतुना भेदे भिन्नभावे धर्मिणः काव्यस्य प्राधान्यं काव्यत्वसामान्यापेक्षयाऽङ्गीक्रियते—धर्मनिष्ठ-प्राधान्यनिरूपितधर्मिनिष्ठप्राधान्यस्येष्यमाणत्वात् । अपि च तयोर्धर्मधर्मिणोरेकत्र काव्यत्वावच्छिन्ने साम्येन समप्राधान्येन सहभावतः समानसत्ताकत्वेन ( स्थितौ ) साहित्यं काव्यात्मकं सम्पद्यते, सहितयोर्धर्मधर्मिरूपिणोः शब्दार्थयोस्तदवस्थानात् पूर्वाचार्यकृततल्लक्षणानुगमाच्चेति ।

**धर्मधर्मिगतः सोऽयं संसर्गः सरसीकृतः ।**

**काव्यसाहित्यरूपत्वे लोकोत्तरतयोम्भितः ॥ ५ ॥**

धर्मेति । किञ्च सोऽयं पूर्वोक्तो धर्मगतो गुणादिव्यङ्ग्यार्थनिष्ठो धर्मिगतो व्यञ्जकशब्दानुगृहीतश्च सरसीकृतः स्वारस्येन रसीभावापन्नो रसात्मत्वप्रतिष्ठामधि-गतश्च काव्यरूपत्वे साहित्यरूपत्वे वा द्वयोरभिन्नार्थकत्वेन काव्याभिन्नसाहित्यलक्षणत्वे व्यवस्थापिते लोकोत्तरतया लोकातिशयिताह्लादजनकत्वेनोम्भितः कल्पितः, तस्यानन्द-मात्रस्य परिस्फूर्तेस्तदितरलोकादतिरिच्यमानत्वादिति भावः ।

**धारणाभ्युदयश्रेयश्चोदनाद्यखिलात्मनः ।**
**काव्यभिन्नस्य शास्त्रोक्तधर्मस्याप्यत्र सङ्गतिः ॥ ६ ॥**

धारणेति । 'धारणाद्धर्म उच्यते', 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः', 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिस्मृत्यादिधर्मशास्त्रोक्ताखिलात्मनः सर्वलक्षणस्य धर्मस्य कर्तव्यतयोपदिष्टस्य पुरुषार्थलक्षणस्याप्यत्र काव्ये सङ्गतिः सङ्गमनं प्रयोजनतयोपपादनं भवति, तदर्थमस्य प्रवृत्तत्वात् । यथा हि—

**"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्" ॥**

इति ।

**वस्तुतो ये हि सम्बन्धा व्यञ्जकत्वादयो मताः ।**
**धर्मधर्मितया तेषां मूलमेकमुदीर्यते ॥ ७ ॥**

वस्तुत इति । वस्तुतो याथार्थ्येन वस्तुस्वाभाव्याच्च ये हि निश्चितार्था व्यञ्जकत्वादय आदिना वाचकत्वलक्षकत्वप्रभृतयश्च सम्बन्धा अनुयोगितया प्रतियोगितया च मता मत्यावस्थापिता मन्यमाना वा सन्ति; तेषां समेषां धर्मधर्मितया धर्मप्रकारकधर्मिविशेष्यतया चैकमेव मूलमुपादानमव्यवहिताद्यहेतुरित्यभिधीयते, तत्त्वतस्तस्यैव पारमार्थिकत्वात् प्रकृष्टप्रतिपाद्यविषयत्वाच्चेति बोध्यम् ।

**वाचकत्वेऽपि तत्सिद्धं लक्षकत्वेऽपि तादृशम् ।**
**वृत्तिमात्रस्वरूपत्वात्कल्पितत्वादनेकशः ॥ ८ ॥**

वाचकत्व इति । वाचकत्वमभिधाख्या शक्तिस्तत्त्वेऽपि तद्धर्मधर्मिभावस्य मूलमाद्यहेतुत्वेन सिद्धं तद्व्यतिरिक्तस्य तस्यानवस्थानात् । अपि च लक्षकत्वे लक्षणाख्येऽपि तादृशं तदवस्थितं तन्मूलं संगच्छते । यतो हि तस्य धर्मधर्मिभावस्य वृत्तिमात्रस्वरूपत्वात् क्रियात्मकव्यापारमात्रलक्षणत्वाद् वृत्तिमदभिन्नाकारप्रतिपत्तेस्तथा चानेकशो नानाविधं तत्तद्रूपभिन्नतया कल्पितत्वात्कल्पनयाऽऽरोपितत्वाच्च तत्सिद्धेरित्याशयः ।

**काव्ये सा भावनास्फूर्तौ रसनव्यापृतिः स्मृता ।**
**धर्मिता तत्र तन्निष्ठा धर्मताऽऽह्लादरूपता ॥ ९ ॥**

काव्य इति । किञ्च काव्ये तल्लक्षणे साहित्ये चोभयसाधारण्येन सा वृत्तिः क्रियात्मिका भावनास्फूर्तिर्भाव्यमानभावोन्मेषस्फुरणात्मिका रस्यमानस्वरूपा रसन-

व्यापृतिर्व्यञ्जनावृत्तिर्व्यञ्जकशब्दार्थोभयनिष्ठव्यञ्जकत्वाकारा स्मृता कल्पिता, तत्र च रसनव्यापृतौ तन्निष्ठा व्यञ्जनगता धर्मिता काव्यतासंवलिता आह्लादरूपता धर्मता लोकोत्तरतया पर्यवतिष्ठते। विगलितवेद्यान्तरत्वेन सार्वकालिकाह्लादमयत्वेन तस्य तथात्वेन सहृदयैरनुभूयमानत्वादिति भावः।

**भावना भावकोन्नीता भाव्यस्थाय्यादियोगतः।**

**चिन्मयानन्दमापाद्य तत्रैषा पर्यवस्यति ॥ १० ॥**

भावनेति। सेयं भावना भाव्यमानस्वभावा भावकैः प्राक्तनेदानीन्तनवासनावासितान्तःकरणैः काव्यतत्त्वविद्भिः सहृदयैरुन्नीता भूयो भूयोऽनुसन्धानविषयीकृता भाव्यरत्यादिस्थायिभावानां योगतो व्यञ्जकत्वसम्बन्धाच्चिन्मयानन्दं चिद्रूपमानन्दात्मकं काव्यात्मभूतं रसमापाद्यानुभाव्य परां रसमयीं निर्वृतिमभिगमय्य तत्रैषाऽऽनन्दमये रस एव पर्यवस्यति परिलीयते, तस्य भाव्यभावकभावनाख्यभेदत्रितयप्रहाणेन तन्मयीभावेन भावितत्वादिति भावः।

**यावद्भावस्थिता वृत्तिर्धर्मधर्मित्वबन्धिनी।**

**तद्व्यपोहे न तद्भावो रसबोधे चिदात्मनि ॥ ११ ॥**

यावदिति। यावन्तो भावा यदवधिकास्ते भाव्यमानरूपा विभावादयस्तन्निष्ठा वृत्तिरभिधाद्या व्यञ्जनाख्या वा धर्मधर्मित्वसम्बन्धानुबन्धिनी व्यवतिष्ठते, भावानामेव तादृशसम्बन्धानुविधायित्वात्। पुनश्च चिदात्मनि चिदाकारे स्वपरिस्फूर्तिमात्रस्वरूपे रसबोधे तस्य भावोद्भूतस्य सम्बन्धस्य व्यपोहे व्यतिगमे प्रविलये वा धर्मत्वेन धर्मित्वेन भानाभावे तस्या वृत्तेरपि भावः पृथगवस्थानं न भवतीति बोध्यम्, तत्र तस्यानान्तरीयकत्वेन कल्पितत्वादिति।

**रत्यादिस्थायिभावानां सम्बन्धोऽन्योन्यमिष्यते।**

**व्यञ्जकत्वादिधर्मेण न तु तस्य चिदात्मनः ॥ १२ ॥**

रत्यादीति। पूर्वोक्तार्थं प्रकारान्तरेण द्रढयितुं पुनरुच्यते—स एष रत्यादिभावानां नैकसंख्यानां नैकसंज्ञानां च सम्बन्धः संसर्गमुद्रया भासमानो व्यञ्जकत्वादिधर्मेण, आदिपदेन वाचकत्वलक्षकत्वादिग्रहणं बोध्यम्। अन्योन्यं मिथः सापेक्षं पारस्पर्येण निरूपितत्वेनेष्यते कल्प्यमानोऽवस्थाप्यते, न तु तस्य चिदात्मनो रसस्य स सम्बन्धो घटते, तद्धानेन तद्बोधस्य निष्प्रत्यूहत्वादिति भावः। "कल्पितं त्वाश्रीयते, न तु पारमार्थिकम्" इतिकैयटोक्तेश्च।

**यतो धर्मा गुणीभूता नानोपाधितया स्मृताः ।**
**तत्तदर्थानुरोधेन सम्बन्धत्वेन कल्पिताः ॥ १३ ॥**

यत इति । यतो हेतोर्धर्मास्तत्तद्रूपेणाख्याता गुणीभूता गुणभावमुपेता गुणवृत्त्या निरूपिता नामोपाधितया व्यवहारोपयोगिनो जातिगुणक्रियाद्रव्यात्मका विशेषाधायकाश्च स्मृताः स्मृत्या निरुक्तास्तत्तच्छास्त्रोदिता भवन्ति, ते च तत्तदर्थानुरोधेन नानाप्रयोजन-मुद्दिश्य सम्बन्धत्वेन धर्मधर्मित्वादिभावेन कल्पितास्तत्र तत्र स्थापितास्तत्तत्स्मृत्यादि-शास्त्रानुशासननिर्दिष्टास्तिष्ठन्तीति बोध्यम् ।

**गुणत्वाच्च प्रहाणत्वमुपाधित्वादनित्यता ।**
**लौकिकार्थोपयोगित्वात्सम्बन्धो धर्मधर्मिणोः ॥ १४ ॥**

गुणत्वादिति । तस्य च सम्बन्धस्य गुणत्वाद् गुणवृत्तिरूपत्वादनुवाद्यत्वाच्च प्रहाणत्वमुपक्षीणत्वं परमार्थतोऽनुपादेयत्वम्, तथोपाधित्वादाधानोपाधानत्वरूपत्वाद-नित्यता प्रविलयतोत्पत्तिपर्याप्तिसत्तया विद्यमानत्वादुपपद्यते । किञ्च लौकिकार्थो-पयोगित्वाल्लोकोद्दिष्टदृष्टार्थफलसम्पादकत्वाद् धर्मधर्मिणोरङ्गाङ्गिभावापन्नयो-र्गुणगुणित्वेन च सम्बन्धोऽत्र काव्यशास्त्रे व्यवस्थाप्यते । क्वचिदाधाराधेयतयाऽपि तयोः सम्बन्धस्य निरूपितत्वान्नास्त्यनुपपत्तिस्तथात्वेऽपि पूर्वोक्तरूपत्वे विप्रतिपत्तेर-भावादिति ।

**तेन सम्बन्धमात्रस्यानित्यत्वं परमार्थतः ।**
**योगायोगतया तत्र युज्यते च वियुज्यते ॥ १५ ॥**

तेनेति । तेनोक्तेन हेतुना परमार्थतः पारमार्थिकभावमपेक्ष्य सम्बन्धमात्रस्य धर्मधर्मिभावादेरनित्यत्वं नित्याभाववत्त्वं कालिकबाध्यत्वं वा प्रसज्यते । अपि च तत्र पारमार्थिकचिदात्मरसाद्यर्थे योगायोगतया तद्भावतदभावानुगततया युक्तायुक्ततया च युज्यते युनक्ति फलमुद्दिश्य वियुज्यते वियुनक्ति तन्निरपेक्षं चेति हानोपादानफलकरूपो-पपत्त्या तस्य तत्र युक्तत्वाद् वियुक्तत्वाच्चेति तात्पर्यमिति ।

**यत्र यच्च गुणीभूतं संयोगाद् विनिवेश्यते ।**
**तच्च तद्धर्मतामेति धर्मिता तन्निरूपिता ॥ १६ ॥**

यत्रेति । काव्यशास्त्रे शास्त्रान्तरेषु किं वा लौकिकेष्वपि पदार्थेषु सामान्यतया धर्मधर्मिभावो गुणगुणीभावाकारेण पर्यवतिष्ठते । यतश्च यत्र धर्मिणि वस्तुनि प्राधान्येन निर्दिश्यमाने संयोगाद्धेतोः सम्बन्धनिबन्धनाद् यच्च तदङ्गभूतं जात्यादिरूपं वस्त्वन्तरं गुणवृत्त्या स्वाप्राधान्येन विनिवेश्यते, तदुपाधित्वेनारोप्यते, तच्चारोप्यमाणं प्राणप्रद-

त्वादिवैशिष्ट्याधायकं वस्तु तद्धर्मतामेति प्राप्नोति तथोक्तप्रधानवस्तुनो धर्मतयाऽऽख्यायते, तन्निरूपिता च धर्मनिष्ठप्रकारतानिरूपितत्वेन धर्मिता धर्मिनिष्ठा विशेष्यता पर्यवतिष्ठते, इत्येष धर्मधर्मिभावस्य सामान्येन विवेकः, धर्मिणि धर्मस्य गुणभावेनैवावस्थानादिति भावः।

**गुणालङ्कारभावार्थरीतिवृत्त्यादयोऽखिलाः ।**
**काव्यधर्मा निरूप्यन्ते तद्वैशिष्ट्यानुयोगिनः ॥ १७ ॥**

गुणेति। सोऽयमुक्तप्रकारकधर्मधर्मिभावः काव्ये साहित्यशास्त्रे माधुर्यादयो गुणा अनुप्रासोपमादयोऽलङ्कारा रत्यादयो भावा वाच्यव्यङ्ग्यलक्ष्यार्था वैदर्भ्याद्या रीतयो भारत्याद्याः कोमलाद्याश्च वृत्तयो व्यक्तीभूता आदिना दोषाः सङ्घटना विविधच्छन्दोविन्यासा इत्याद्यखिलास्तद्वैशिष्ट्यानुयोगिनस्तस्य काव्यस्य स्वेतरभेदप्रयोजकोत्कर्षाधायकाः स्वत्वेन का यानुगुण्यभाजस्तद्धर्मा निरूप्यन्ते तत्तल्लक्षणनिरूपणेन व्यवस्थाप्यन्ते, तत्र गुणालङ्कारव्यतिरिक्तस्यान्येषां धर्मत्वस्य पारिभाषिकत्वेन कल्पितत्वेनाभ्युपगमादिति काव्यशास्त्रगतो धर्मधर्मिभावप्रविवेकः।

**रसस्यात्मतया काव्यमभिव्याप्य व्यवस्थितिः ।**
**चिदाह्लादमयं तस्य स्वरूपं प्रतितिष्ठति ॥ १८ ॥**

रसस्येति। तथोक्तगुणालङ्कारादिधर्मलक्षणे काव्ये तदङ्गभूते साहित्यशास्त्रे वा रस्यमानस्वरूपस्य सहृदयहृदयैकगोचरीक्रियमाणस्यानुभूतिमात्रविषयीकृतपरात्मनिर्वृतिलक्षणस्य च रसस्यात्मतया जीवनाधायकत्वेन काव्यमभिव्याप्याभितो व्यापकत्वेनात्मसात्कृत्य च व्यवस्थितिर्विशिष्टावस्थानमस्तीति बोध्यम्। विशिष्टत्वञ्च तद्गतविभावादिसंवलनादुन्नीयते। किञ्च तस्य तादृशोक्तलक्षणस्य रसस्य चिदाह्लादमयं चिद्रूपमाह्लादरूपं चिद्विशिष्टाह्लादमयमाह्लादविशिष्टं चिन्मयं वा, उभयत्र विशेष्यविशेषणभावो रसबोधोयप्रकारतापर्यवसायी तदौपाधिक एवेति बोध्यम्। इत्थमनन्तरोक्तलोकोत्तरचमत्कृतिप्राणस्य तस्य स्वरूपं तत्त्वतोऽनुभूयमानं स्वतः प्रामाण्यप्रत्ययेन प्रतितिष्ठति प्रतिष्ठामाप्नोति—"रसो वै सः", "रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति ब्रह्मसविधवर्तिरसाद्वैतचिदानन्दमयतद्विषयकश्रुतिवाक्यप्रामाण्यादिति भावः।

**शब्दार्थसहभावोद्यत्साहित्यं काव्यनामभाक् ।**
**परां निर्वृतिमापन्नं तद्रसे परिवर्तते ॥ १९ ॥**

शब्दार्थेति। "शब्दार्थौ सहितौ काव्यम्" इत्युक्तेस्तयोः शब्दार्थयोः सहभावेन समसत्ताकसमवस्थानेनोद्यदुद्भवदुदीयमानं कविवर्णनानैपुण्येन साहित्यं काव्यनाम-

भाक् तल्लक्षणेन व्यपदिश्यमानं भवति, तत्तादृशं साहित्यलक्षणं काव्यं परामनाख्येयां निर्वृतिं चिदात्मलोकोत्तरसुखानुभूतिमापन्नं तद्रूपेणास्वाद्यमानं रसे परिवर्तते परिवृत्तिमाप्नोति प्रत्यग्विलयमासाद्य विभावादिसमूहालम्बनत्वेन तत्क्षणानुभूतिप्रतिपन्न-तदास्वादस्वरूपत्वादिति प्रत्येतव्यमिति ।

**काव्योक्तानां गुणादीनां भावानां धर्मसंज्ञिनाम् ।**
**रसोपस्कार्यताहेतोर्धर्मिता तदवस्थिता ॥ २० ॥**

काव्येति । काव्योक्तानां शब्दार्थमयसाहित्यस्वरूपकाव्यशास्त्रोक्तलक्षणलक्षितानां गुणादीनां समग्रभावानां विभावानुभावव्यभिचारिप्रभृतीनां धर्मसंज्ञिनां स्वाप्राधान्येन धर्मसंज्ञया व्यवह्रियमाणानां रसोपस्कार्यता हेतो रस एवोपस्कार्यस्तत्तया तेषां च तदुपस्कारकत्वेन धर्मिता तदभिव्यक्तिनिष्ठमुख्यता विशेष्यतादिभेदव्याहृता तदवस्थिता रसात्मककाव्यव्यक्तिगता तिष्ठतीत्यभिप्रायः, काव्योक्तगुणाद्यपेक्षयोपस्कार्यत्वेन प्राधान्येन च तस्यावस्थानाद् धर्मितायास्तदनुस्यूतत्वाच्चेति बोध्यम् ।

**स्वप्राधान्येन धर्मित्वमन्यथात्वे तु धर्मता ।**
**गुणालङ्कारभावादिष्वर्थादारोप्यते क्वचित् ॥ २१ ॥**

स्वप्राधान्येनेति । स्वप्राधान्यप्रयुक्तं धर्मित्वं प्रायः सार्वत्रिकमित्युच्यते । स्वप्राधान्येन स्वत्वेन प्रधानतयाऽवस्थितेन, प्राधान्यं च स्वेतरापेक्षया कल्प्यमानं वस्तुनिष्ठम्, तेन तस्य धर्मित्वं सिद्ध्यति, अन्यथात्वे स्वाप्राधान्येनोद्दिष्टे तु तदितरत्र धर्मता गुणप्रभावेन भवति, द्वयमिदं धर्मित्वं धर्मत्वं वा सम्बन्धनिबन्धनतया सम्बन्धिनोर्वस्तुनोः प्राधान्याप्राधान्यनिरूपणेन प्रतिष्ठते, तदित्थं गुणालङ्कारभावादिषु रसात्मककाव्यधर्मेष्वपि क्वचित्तत्प्राधान्यमुद्दिश्य तदितरापेक्षयाऽर्थात्प्रयोजनवशाद् धर्मित्वं चारोप्यते, अयमारोप औपचारिक एवेति बोध्यम्, तस्योपचरितवृत्त्यैव परिकल्पितत्वादिति ।

**विषयित्वेन धर्मित्वं धर्मत्वं विषयत्वतः ।**
**काव्ये सादृश्यसम्बन्धादुपमादिप्रयोजकम् ॥ २२ ॥**

विषयित्वेनेति । क्वचिद् विषयित्वेन विषयत्वेन च धर्मित्वं धर्मत्वं चावस्थाप्यते । विषयित्वेन स्वनिष्ठविषयितासम्बन्धेन धर्मित्वं स्वेतरनिष्ठविषयतानिरूपितं तथा विषयत्वतः स्वनिष्ठविषयत्वसम्बन्धेन तदन्यगतविषयितानिरूपितेन धर्मत्वं तिष्ठतीति विषयविषयिभावेन धर्मधर्मिभावविवेकः काव्ये तदुपलक्षिते साहित्यशास्त्रे सादृश्यसम्बन्धात् साधर्म्यप्रयोज्यचमत्कारवदुपमानोपमेयगतसाम्ययोगादुपमादि-प्रयोजकः सादृश्यमूलकोपमारूपकापह्नुतिपरिणामोत्प्रेक्षातिशयोक्त्याद्यलङ्कारप्रयोजक-

हेतुको भवति, विषयविषयित्वेनोपमानोपमेययोर्धर्मधर्मितया सादृश्यसम्बन्धगतत्वेनोपात्तत्वादिति ।

**यस्य चैकत्र धर्मित्वं तस्याप्यन्यत्र धर्मता ।**
**पारस्परिकसंयोगे फलमुद्दिश्य कल्प्यते ॥ २३ ॥**

यस्येति । एकत्र धर्मित्ववतोऽप्यन्यत्र धर्मवत्त्वमित्युच्यते—यस्य धर्मिणो वस्तुनश्चैकत्र धर्मित्वं तद्गतप्राधान्येन तस्याप्यन्यत्र तदन्यापेक्षया सत्यप्राधान्ये धर्मता गुणभावतो भवतीति नायं धर्मधर्मिभावो नियतसम्बन्धिगतो नित्यसम्बन्धोऽध्यवसीयते, प्राधान्याप्राधान्येन तस्यारोप्यमाणत्वाद् गुणगुणितयोपचरितत्वाद् विषयविषयित्वेन निरूपितत्वाच्चेति बोध्यम् । यतश्च पारस्परिकयोर्द्वयोर्वस्तुनोः संयोगे नानाविधे सम्बन्धे फलमुद्दिश्य प्रयोजनं तत्त्वावबोधात्मकमुद्देश्यतयाऽभिलक्ष्य कल्प्यते कल्पनयोपादीयते बुद्ध्या समारोप्यते, तदुभयं धर्मित्वं धर्मत्वं चेत्यभिप्रायः । नित्यत्वेन तदुपादाने तदुभयकल्पने मानाभावात्, धर्ममात्रस्य कल्पितत्वेनैवोपादेयत्वात्तन्निरूपितधर्मिणश्चापि तथात्वादिति भावः । सापेक्षनित्यत्वे त्वविरोध एवेत्यवधेयम् ।

**कविकाव्यगतो धर्मधर्मिभावो विशेषतः ।**
**गुणालङ्कारसंयुक्तो रसोत्कर्षाय कल्पते ॥ २४ ॥**

कविकाव्येति । कविकाव्ययोरभेदाध्यवसायादेकोक्तेरन्योपस्थितेरनिवार्यत्वात्तदुभयोपादानं कर्तृकर्मतया सम्बन्धवैशिष्ट्यद्योतनायेति बोध्यम् । तेन तद्गतोऽयं धर्मधर्मिभावोऽपि शास्त्रान्तरोक्तधर्मधर्मिभावापेक्षया विशेषतः सौन्दर्यवैशिष्ट्यावबोधायेति बोध्यम् । तस्य लोकसामान्यापेक्षया लोकोत्तरत्वेन चमत्कृत्याधायकत्वेन सत्त्वात्तादृशो विशिष्टधर्मधर्मिभावो गुणालङ्कारसंयुक्तो माधुर्याद्यनुप्रासोपमादिसंसर्गकृतो रसोत्कर्षाय काव्यात्मभूतरसास्वादप्रकृष्टानुभवाय कल्पते क्षमते, वैचक्षण्येन शब्दार्थयोः साहित्ये सन्निवेश्यते, काव्यगतानां गुणालङ्कारादिकृतनिःशेषविशेषाणां काव्यात्मरसोत्कर्षाधायकत्वेनोपादेयत्वादिति तद्गतस्य धर्मधर्मिभावस्यापि तादर्थ्यादिति भावः ।

**जातिव्यक्त्याकृतिप्रख्याः पदार्था भेदमाश्रिताः ।**
**नैकसम्बन्धसम्बद्धा लोके शास्त्रे च कल्पिताः ॥ २५ ॥**

जातीति । पदार्थाः शब्दसामान्यवाच्याः वस्तुसामान्यस्वरूपा जातिप्रख्या व्यक्तिप्रख्या आकृतिप्रख्याश्च नामगुणादिकृतविषयभेदमाश्रिता तत्र तत्र व्यवहारविषयतां प्रतिपद्यन्ते गृहीतसंकेतशब्दप्रतिपाद्या भवन्ति । ते च नैकसम्बन्धसम्बद्धा वाचकत्वादिमुख्यामुख्यत्वानेकसंसर्गसृष्टा यथा लोके तथा शास्त्रे कल्पिता व्यवस्थापिताः

सन्ति। लोकार्थमेव शास्त्रस्य प्रवृत्तत्वात्तदतिरिक्तत्वे तदाचरणवैयर्थ्यापतेश्चेति लोकशास्त्रयोरन्योन्यं प्रवृत्तिप्रयोजकत्वं सिद्ध्यतीति बोध्यम्।

**तद्द्वयोत्तरवर्तित्वे कवेः काव्यस्य संस्थितिः।**
**चिदाह्लादमयी प्रोक्ता तत्र भेदः प्रणश्यति ॥ २६ ॥**

तदिति। तयोर्लोकशास्त्रयोरुभयोरुत्तरवर्तित्वे तद्द्वयादतिशायित्वे अलौकिकाह्लादजनकत्वेनोत्कृष्टतया सत्त्वे कवेः काव्यस्य तदभिन्नतत्कर्मत्वावच्छिन्नशब्दार्थसन्दर्भवतः काव्यत्वविशिष्टस्य काव्यपदार्थस्य संस्थितिः सम्यगवस्थानं तन्नियमानुकूलं रसात्मबोधौपयिकव्यवस्थितिरस्तीति तात्पर्यम्। लौकिकैर्विभावादिभिरलौकिकत्वेन वर्णनानैपुण्येन सुखानुभूतेर्लोकशास्त्रोभयव्यतिरिक्तत्वेन कवेः काव्यस्य वैलक्षण्यादित्याशयः। सा चालौकिककाव्यस्यालौकिको संस्थितिश्चिदाह्लादमयी चेतनाश्रयानन्दरूपा तदात्मनिरतिशयलोकोत्तरसुखात्मिका प्रोक्ता प्रतिपादिता, तत्र तत्र लक्षणग्रन्थेषु तद्विद्भिर्लक्षणकृद्भिरित्यभिप्रायः। तत्र चैतादृशालौकिकस्थितिमधिष्ठिते काव्ये भेदः सम्बन्धगतः सम्बन्धिगतो वृत्तिगतश्च सर्वविधः प्रणश्यति प्रलीयते, सर्वविधभेदप्रहाणेनैव तादृशानुभवसम्प्रत्ययस्य सम्भवादिति भावः। अतश्चायं धर्मधर्मिभावोऽपि काव्यगतस्तल्लक्षणकोटिप्रविष्टः काव्यशास्त्रीयविषयत्वेन प्रतिपादितः समुपपद्यते, तावन्मात्रेण तस्योपयुक्तत्वादिति।

**भेदे द्विष्ठतया ह्येते सम्बन्धाः सप्रयोजनम्।**
**धर्मधर्मित्वभावादिनानारूपाः प्रदर्शिताः ॥ २७ ॥**

भेद इति। भेदे पृथक्त्वेन निर्दिष्टे भिद्यमानस्वरूपे वस्तुनि ह्येते भूयोलक्षणलक्षिताः सम्बन्धा सम्बन्ध्यनुबन्धिनो द्विष्ठतयाऽनेकवस्तुनिष्ठस्वभावतया सप्रयोजनं तत्तदर्थमनुश्रित्य फलोद्देश्यतया तदुद्दिष्टतत्त्वाधिगमाय तात्त्विकफलोपपत्तये सम्बन्धिनोः सम्बन्धस्य साफल्यादिति भावः। ततश्चैते धर्मधर्मित्वभावादयो विषयविषयित्वादयो गुणगुणित्वभावादयस्तत्त्वानुरोधेन नानारूपा बहुविधा निरूपितास्तत्तल्लक्ष्यानुरूपतया तादृशलक्षणनिरूपणपूर्वकं प्रदर्शिता लक्षिताः सन्ति। "सम्बन्धाः सप्रयोजनाः" इत्यभियुक्तोक्तेश्च।

**किञ्च काव्यस्य साहित्यशास्त्रत्वे सम्प्रतिष्ठिते।**
**धर्मधर्मितया तत्र व्यञ्जकत्वादिकं मतम् ॥ २८ ॥**

किञ्चेति। किञ्चानन्तरोक्तार्थदृढीकरणाय प्रतिपाद्यविषयोपसंहाराय चेदं पुनरुच्यते—काव्यस्य यथोक्तलक्षणस्य साहित्यशास्त्रत्वे शासनाच्छंसनाद् वा नियम्य-

नियामकत्वेन च काव्यसाहित्यशास्त्रत्वस्वरूपे सम्प्रतिष्ठिते सम्यक्साध्वसाधुलक्षण-विवेचनेन प्रतिष्ठामधिगते विशिष्टस्थितिमासादिते शास्त्रान्तरेषु चान्यतमत्वेन पर्यवस्थिते शास्त्रलक्षण एवैतस्मिन्न तु रसात्मलोकोत्तरकाव्यानुभूतिसन्दर्भे, धर्मधर्मितया तद्भावेन सम्बन्धेन व्यञ्जकत्वादिकं व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनं व्यञ्जनध्वनन-प्रत्यायनादिनानाव्यपदेशभाग्वृत्तिविशेषितं मतमभ्युपगतं काव्यशास्त्रकृद्भिराचार्यै-रिति तत्सिद्धान्तानुरोधाद् यथामति काव्ये ( साहित्ये ) धर्मधर्मिभावविमर्शः संक्षिप्त-कारिकावृत्तिग्रन्थप्रणयनेन प्रस्तुतस्तद्विदां सुहृदां सुधियां मुदे समुदियादिति कृतं पल्लवितेन ।

●

# साहित्यस्वरूपविमर्शः

अथ किं नाम साहित्यं किञ्च तल्लक्षणं किं वा तदुपयोगित्वमिति जिज्ञासाया-मुच्यते—

**सहभावेन साहित्यं काव्ये शब्दार्थयोर्मतम् ।**
**तयोरेकतरस्यापि द्वयोर्वा सुष्ठुसंस्थितौ ॥ १ ॥**

शब्दश्चार्थश्चोभयोस्तुल्यप्राधान्येन सहावस्थानं गद्यपद्योभयात्मके कविकर्मनि-बन्धने काव्ये साहित्यमित्यभिमतम् । तच्च तयोः समप्राधान्येनावस्थितयोः शब्दार्थयो-रेकतरस्य शब्दस्यार्थस्य वा, अपिशब्देन द्वयोः ( शब्दार्थयोरुभयोः ) वेति पक्षान्तर-द्योतकम् । सुष्ठु सम्यक्साम्यसाधुशोभनतया संस्थितौ सम्यगवस्थाने संगच्छते । शब्दार्थयोरेकतरस्यापि सम्यगवस्थाने साहित्यलक्षणत्वाङ्गीकारे शब्दमात्रप्राधान्ये-नार्थमात्रप्राधान्येनोभयप्राधान्येन चाङ्गीकृते काव्ये साहित्यमक्षतमुपयुज्यत इति तात्पर्यम् !

**साहित्यं साम्यसद्भावप्रभावादुपयुज्यते ।**
**तद्विना नो विनेयानामुन्मुखीकरणं भवेत् ॥ २ ॥**

तच्चोपरिष्टाल्लक्षणलक्षितं साहित्यं साम्यं समभावः समप्रधानतया साधार-णीकरणात्मना जायमानः सद्भावः सम्यक्सहृदयत्वभावो स्नेहसौख्यसम्पादकत्वेन समुद्भूतस्तेन यः प्रभावः प्रकृष्टभावनात्मकप्रसरस्तस्माद्धेतोरुपयुज्यते । यतो हि तद् विना तादृशसाहित्यमन्तरेण विनेयानां विनेतुं योग्यानां शिक्षणीयशिष्याणामुन्मुखीकरणं तदध्ययनास्वादनपरिशीलनादिप्रवृत्तिजननं न भवेद् भवितुं शक्नुयादिति ।

**हितं नाम हि कल्याणं तेन सौहित्यमिष्यते ।**
**सौशब्द्यात्सम्यगर्थीयसंयोगात्तत् प्रशस्यते ॥ ३ ॥**

हितमिति मनसोऽनुकूलतयाऽनुभूतत्वेन कल्याणं स्वात्मनोन्नयनपरम्, तेन च सौहित्यं शोभनं सर्वविधं हितभावसंवलितं सौख्यमिष्यते सर्वैरिति शेषः । तच्च सौहित्य-परिगतं साहित्यनिष्ठं सौख्यं सौशब्द्यात् सुष्ठुशब्दभावसन्दर्भसम्बन्धात् सम्यगर्थीय-संयोगात् सविधिसदर्थोद्भवसंसर्गाच्च प्रशस्यते प्रशस्तिमधिगच्छति लोके काव्यकर्मानु-कूलेन साहित्येनेति भावः ।

**वैदिकं लौकिकं वाऽपि द्वयं वर्गचतुष्टयम् ।**

**दर्शयत् सन्ददल्लोकहिताय प्रथतेतराम् ।। ४ ।।**

वैदिकं वेदादिसम्बन्धि लौकिकं लोकानुबन्धि वेति पक्षान्तरप्रकाशनेनोभय-समानफलप्रदर्शनपरम् । अपिरेवार्थकः । तच्च द्वयं साहित्यं वर्गचतुष्टयं धमार्थकाम-मौक्षाख्यं दर्शयत् दृष्टिपथमुन्नयत् सन्ददच्च सन्ददानं च लोकस्य प्राधान्येन सहृदय-जनस्य तद्द्वारा जगतश्च हिताय सौख्याय प्रथतेतरां निरतिशयं प्रथामाप्नोतीति ।

**हितेन सहितं किं वा समानं हितमक्षयम् ।**

**तद्भावेन प्रवृत्तं सत् साहित्यं किल शाश्वतम् ।। ५ ।।**

किञ्च हितेन कल्याणोन्मुखसौख्येन युक्तं सहितं हितान्वितं किं वेति तदर्थानु-रोधकम् । समानं सदृशं सप्रमार्णं सादरमानं च अक्षयं क्षयरहितं नित्यनवं यद् हितं रसात्मकं सुखम्, तद्भावेन तादृशसुखत्वानुरोधेन प्रवृत्तं प्रवृत्तिमापन्नं सत् साधु शोभनं साहित्यं शाश्वतं चिरन्तनं लोकोत्तरं भवति । किलेति तदर्थदार्ढ्ये ।

**लोकोत्तरतया लोके प्रतितिष्ठदहर्निशम् ।**

**लोकालोकाद्भुतानन्दस्यन्दि साहित्यमुच्चितम् ।। ६ ।।**

लोकादूर्ध्वमुच्चैस्तरति वर्तत इति लोकोत्तरं लोकोत्कृष्टं लोकाय स्पृहणीय-तरत्वादिति भावः तस्य भावस्तया अलौकिकानन्दजनकतया लोके भुवने अहर्निशं निरन्तरं प्रतितिष्ठत् प्रतिष्ठामधिगच्छत्, अपि च लोकाय य आलोकः प्रकाशः रसज्ञा-नात्मकावभासस्तस्याद्भुतमनिर्वाच्यं वेद्यान्तरविगलितं चमत्काराधायकमानन्दमाह्लादं स्यन्दते जनयति वर्षतीति तादृशं साहित्यं काव्याङ्गभङ्गीयुतमुच्चितमुच्चैर्व्याप्तं जगतीति भावः ।

**एतदेवास्य वैशिष्ट्यं लौकिकत्वेन कल्पितम् ।**

**लोकातिक्रान्तभावानां वाहकं साधकं च तत् ।। ७ ।।**

एतदेवोपरिनिर्दिष्टं सहृदयहृदयावर्जकमस्य साहित्यस्य वैशिष्ट्यं सविशेष-गुणजुष्टं विशिष्टतागर्भं तत्त्वं लौकिकत्वेन लोकभावेन लोकान्तर्गतमिति यावत् कल्पितं स्मृतं कल्पनोदितमित्यर्थः । तच्च तथाविधं साहित्यं लोकातिक्रान्तभावानां लोकादति-क्रम्य विद्यमानानां लोकोत्तराणां भावानां पदार्थानां वाहकं शब्दार्थारोहणदृशा वहनक्षमं साधकं रसाद्युपस्कारेण साधनक्षमं चास्तीति शेषः ।

**लोक्यमानतया लोको दृष्टिसृष्टिसमेधितः ।**
**आतिशय्येन तद्भावाः क्रमन्ते क्रान्तदर्शने ।। ८ ।।**

लोक्यमानतया लोकनधर्मतया दृश्यभावरूपेणेत्यर्थः । अयं लोको जडचेतनात्मकं जगत्, दृष्टेर्दर्शनस्य सृष्टिःसर्जनं तत्समेधितः सम्यग्वृद्धिमुपेतो दृश्यसर्गात्मक इति भावः । तस्य लोक्यमानधर्मवतो लोकस्य भावा आशयाः पदार्थपरिनिष्ठिता विमर्शा अतिशायित्वेन प्राचुर्येण निरतिशयप्रामुख्येन क्रान्तदर्शने काव्यात्मके साहित्ये क्रान्तमतिगतं दर्शनं सामान्यलोकावलोकनं येन तदस्मिन् विलक्षणे काव्यसाहित्यसंसारे क्रमन्ते क्रमेण वर्णनपदमुपयान्तीति भावः ।

**अत्रातिशयता सेयं साधारण्येन युज्यते ।**
**यश्च तद्योजकः सम्यक् स साहित्यकृतेः कृती ।। ९ ।।**

अत्र साहित्ये सेयमुपर्युक्ता अतिशयता लोकोत्तरता सातिशयवर्णनवैशिष्ट्य-मित्यर्थः । साधारण्येन साधारणीकरणात्मना व्यापारेण सामान्यविधानेन युज्यते योगमुपगच्छति । यश्च तद्योजकस्तादृशातिशयस्य साधारण्येन योगविधायकः कविकर्म-धर्मप्रणिधानेनासाधारणं साधारणीकृत्य शब्दार्थयोजनकुशलः स सुप्रसिद्धो रससिद्धश्च साहित्यकृतेः काव्यसाहित्यसृष्टेः कृती कर्ता लोकोत्तरकविकर्मधर्मानुष्ठाता कविरित्यर्थः अन्वर्थनाम्नाऽभिधीयते लोकेऽस्मिन्निति शेषः ।

**आकाशगुणकः शब्दस्तथार्थश्च घटादिकः ।**
**सहभावस्तयोः कुत्र पृथिव्याकाशवर्तिनोः ।। १० ।।**

ननु कण्ठताल्वाद्यभिघातजन्यः समुच्चरितः शब्द आकाशगुणत्वेन तदन्तर्निष्ठ-स्तिष्ठति । तथा हि तद्वैपरीत्येन घटपटाद्यर्थोऽभिधेयः पृथ्व्यन्तर्गतः संलक्ष्यते । एवं सत्यनयोः पृथक् स्थितयोर्भिन्नरूपयोः पृथिव्याकाशवर्तिनोर्जगद्व्योमचारिणोः शब्दार्थ-योर्वर्णसमुदायात्मकपदवाच्ययोः कुत्र कस्मिन् स्थाने कुतो वा सहभावः सहावस्थानं वाच्यवाचकभावसम्बन्धनिबन्धनतया बोधफलं बोध्यत्वं वा सम्भवेदिति जिज्ञासाया-मुच्यते—

**श्रोत्रव्योमगतः शब्दः स्फुटदर्थावबोधकः ।**
**बोध्यबोधकभावेन बोधार्थं परिकल्पते ।। ११ ।।**

श्रोत्रव्योमगतः कर्णास्थाकाशनिष्ठः शब्दो वर्णात्मकः स्फुटदर्थावबोधको ध्वन-दर्थप्रत्यायको भवति । तेन बोध्यबोधकभावेन वाच्यवाचकसम्बन्धेन बोधार्थं स्वार्थ-

ज्ञानाय बुद्धिस्थत्वावच्छिन्नार्थप्रतिपत्तये परिकल्पते परितः कल्पितो भवति पार्यन्तिकतया स्मृतिविषयतामभिपद्यत इति भावः ।

**प्रकृतिप्रत्ययादीनां सुबादीनां च कल्पनम् ।**
**शब्दादर्थं समुद्दिश्य यथा सन्धीयते तथा ।। १२ ।।**

प्रकरणात्प्रकृतिः प्रकृष्टकृतिरूपा, परार्थत्वात्प्रत्ययोऽर्थबोधानुरूपः, आदिपदेन निपातादयस्तेषाम्, तथा च सुबादीनां सुबन्तानां तिङन्तानां च कल्पनं स्मृत्योपस्थापनं शब्दाद् ध्वन्यात्मकाद् वर्णात्मकाच्च अर्थं संकेतितं घटपटादिकं समुद्दिश्य सम्यगभिलक्ष्य यथा येन विधानेन सन्धीयते बुद्धिसन्धानविषयीक्रियते तथा तेनैव शाब्दानुबोधविधानानुरूपम्—

**शब्दनात् स्फोटनात् किञ्च व्यञ्जनात्संहृतक्रमः ।**
**शब्दः संकेतितोऽर्थे द्राग् बोधकत्वेन गृह्यते ।। १३ ।।**

शब्दनाद् ध्वननात् स्फोटनात् स्फोटवृत्त्यनुवर्तनात् किञ्च पुनश्च व्यञ्जनात् व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनाद् व्यापारात् संहृतक्रमो बुद्धिस्थसम्वृतवर्णानुपूर्वीकः समकालिकसमुदायोपस्थितः शब्दोऽर्थे संकेतितो गृहीतशक्तिको द्राग् झटिति बोधकत्वेन वाचकत्वेन गृह्यते बुद्धिविषयीक्रियते वाच्यवाचकसम्बन्धानुरोधाद् बुद्ध्युपारूढो भवतीति तात्पर्यम् ।

**घट इत्युक्तितः कम्बुग्रीवादिप्रथिताकृतिः ।**
**व्यक्तिरासाद्यते बुद्ध्या तद्योगस्तत्समन्वयात् ।। १४ ।।**

तदेव पुनर्द्रढयति—घट इत्युक्तितः घट इतिवर्णसमुदायात्मकशब्दाभिधानात् कम्दुग्रीवादिप्रथिताकृतिः कम्बुग्रीवादिमदाकारवैशिष्ट्येन संकेतविदिता व्यक्तिः पदार्थरूपबुद्ध्याऽऽसाद्यते धियाधिगृह्यते । तद्योगस्तयोर्वाच्यवाचकयोः सम्बन्धस्तत्समन्वयाच्छब्दार्थयोः सम्यक्संयोगावधारणात् सम्पद्यते ।

**भेदाभेदात्मकं तत्र तयोस्तादात्म्यमन्वयः ।**
**सम्यक्त्वेनानयोर्योगो बौद्ध एवेति शाब्दिकाः ।। १५ ।।**

तत्र वाच्यवाचकसम्बन्धे तयोः शब्दार्थयोर्भेदाभेदात्मकं भेदेनाभेदेन च परिगतस्वरूपं तादात्म्यं तदुभयात्मकत्वरूपो योग एवान्वयः सम्बन्ध इत्युच्यते । स च सम्यक्त्वेन साधुत्वप्रकारकबोधेनानयाः शब्दार्थयोर्योगो बौद्ध एव बुद्धिस्थत्वावच्छिन्न एवेति शाब्दिकाः शब्दतत्त्वविदो मन्वते ।

**अन्यैरन्यादृशं स्वीयं मतमास्थाप्यते पृथक् ।**
**सम्बन्धान्तःप्रकाराणां भेदास्ते नैव तात्त्विकाः ।। १६ ।।**

अन्यैः सुधोभिर्दर्शनान्तरनिष्ठसिद्धान्तानुयायिभिः स्वीयमात्मपरिकलितं मतमन्यादृशं शाब्दिकेतरराद्धान्तानुगतं पृथग् भिन्नमास्थाप्यते शाब्दमतनिरसनपुरःसरं व्यवस्थाप्यते। परं सम्बन्धस्य वाच्यवाचकरूपस्यान्तःप्रकाराणां तदन्तर्वर्तिविशेषाणां ते तत्तन्मतप्रतिपादिता भेदा विशेषास्तात्त्विकास्तत्त्वप्रकाशनपरा न सन्तीति शेषः। केवलं स्वमतवैशिष्ट्यमात्रनिरूपकास्ते भेदाः पर्यवसातव्या इति भावः।

**वाचकत्वादयस्तद्वत्सम्बन्धाः परिकल्पिताः ।**
**तत्प्रकाराश्च तादृक्षास्तत्र भूयो निरूपिताः ।। १७ ।।**

यथा हि प्रकृतिप्रत्ययादयः कल्प्यन्ते तद्वदेव वाचकत्वादयो वाचकत्वलक्षकत्वव्यञ्जकत्वप्रभृतयश्च सम्बन्धाः शब्दार्थोद्देश्यविशेषभावेन परिकल्पिताः परिष्कृत्य बोधानुकूलतया स्मृताः कल्पनोद्भाविता भवन्तीति। अपि च तेषां सम्बन्धानां प्रकाराश्च विशेषोल्लासका भेदाश्च तादृक्षाः प्रकृतिप्रत्ययाद्यनुकूलास्तत्र शब्दार्थोभयसन्दर्भे भूयो बहुशो निरूपिता निरूप्यनिरूपकभावेन प्रतिपादिताः सन्ति।

**नानाप्रकारताः प्रोक्ता उद्दिश्यैकां विशेष्यताम् ।**
**तत्प्रकारपरिष्काराः प्रकारीभूय भूरिशः ।। १८ ।।**

इत्थञ्च शब्दार्थसम्बन्धकल्पनानुरूपमेवैकां सोद्देश्यनिर्दिष्टां विशेष्यतां विशेष्यनिष्ठां तद्धर्मावच्छिन्नां वस्तुवृत्तिमतीमुद्दिश्योद्देश्यतया निर्दिश्य नाना नैकविधाः प्रकारता विशेषणता विशेषधर्मावच्छिन्नाः प्रोक्ता निरूपिताः पदार्थसन्दर्भे, किञ्च तत्प्रकारपरिष्काराः परिष्कृतव्याहाराः परिष्करणपरोपाया भूरिशः प्रचुराः प्रकारीभूय प्रकारतान्तर्गता एव तद्रूपतया तत्र तत्र प्रतिपादिताः प्रतिष्ठन्ते।

**यद् विशेष्यतया वस्तु प्रमेयं प्रतितिष्ठति ।**
**तदसद्भेदभिन्नं सत् प्रमितं मूलतः स्वतः ।। १९ ।।**

सत्स्वपि नानाप्रकारतावच्छिन्नेषु नैकलक्षणलक्षितेषु परिष्कारबहुलेषु विशेष्यवस्तुषु यद् विविक्तं सुविश्रुतं विशेष्यतया विशेषयितुं योग्यतया विशेष्यरूपतया च परिज्ञातं प्रमेयं प्रमातुमर्हं प्रमोपनतं यथार्थपरिनिष्ठितं च वस्तु प्रतितिष्ठति प्रतिष्ठाधिष्ठितं तिष्ठति पर्याप्तबुद्धिनिष्ठं प्रतिभासते तत् सर्वतोभावेन विदितप्रख्यं वस्तु, असद्भेदभिन्नं असद्रूपेभ्यो भेदेभ्यो विशेषेभ्यः प्रकारेभ्यश्च भिन्नं पृथग्भूतं निर्विशेषं

निरुपाख्यं निर्विचिकित्सं वस्तु मूलतः स्वरूपतः स्वतः स्वस्मात्प्रमाणात् स्वप्रामाण्यप्रकाशितं स्वतः प्रकाशमानं सत् प्रमितं प्रमाविषयीकृतं यथार्थज्ञानात्मकं चिद्रूपं पर्यवतिष्ठते परात्मतत्त्वैकसत्त्वलक्षणमिति भावः।

**तदेव यदि शब्दार्थसङ्गत्या सहभावताम्।**
**समासाद्य प्रभासेत तदा साहित्यनामभाक्॥ २०॥**

तदेवोपर्युक्तं स्वतः प्रमितं चिद्रूपं वस्तु शब्दार्थयोः वाच्यवाचकयोः सङ्गत्या सम्बन्धेन व्यङ्ग्यव्यञ्जकभावरूपेण सहभावतां सहावस्थानं समसत्ताकवर्णनपदवीं समप्राधान्येन समासाद्य सम्यगधिगम्य यदि प्रभासेत प्रकृष्टभासा प्रतीयेत सचमत्कृति प्रकाशेत तदा तस्मिन् समये साहित्यनामभाक्कृत्साहित्यमिति नाम भजमानं साहित्यतत्वाख्यं सहृदयहृदयानन्दजनकं लोकोत्तरं भवतीति शेषः।

**तच्च चित्तचमत्कारि रसवस्तु प्रचक्षते।**
**शब्दार्थौ व्यञ्जकत्वेन सम्बन्धेनात्र कल्पितौ॥ २१॥**

तच्च तादृशं साहित्यपदाभिधेयं लोकोत्तरं चित्तचमत्कारि सहृदयहृदयाह्लादविधायकं रसवस्तु रसाख्यं ब्रह्मानन्दसविधसमवस्थितं वस्तुरूपं परात्मकं प्रचक्षते प्रणिगदन्ति व्यवहरन्ति साहित्यतत्त्वविदो मनीषिणः। अत्र च लोकोत्तरचमत्कारसारे रसवस्तुनि शब्दार्थौ द्वावपि व्यञ्जकत्वेन व्यञ्जनाख्येन सम्बन्धेन योगेन व्यङ्ग्यव्यञ्जकभावभावितेन कल्पितौ स्तः सम्बन्धान्तरप्रसक्तिनिरसपुरःसरमिति भावः।

**व्यञ्जकत्वैकमूलत्वात्साहित्यमनयोर्हि यत्।**
**तदेकान्तमनोहारि रसोद्भावनयाऽनया॥ २२॥**

अनयोः सहभावमापन्नयोः शब्दार्थयोर्व्यञ्जकत्वं व्यञ्जनध्वननप्रत्यायनादिशक्तिसंवलितत्त्वं व्यञ्जनावृत्तिमत्त्वं वा तदेकमात्रंविलक्षणं मूलं स्रोतस्तत्त्वात्सम्पद्यमानं यल्लोकोत्तरं साहित्यं तत्सहृदयलोकसुप्रसिद्धमेकान्तेन नैश्चित्येन सर्वास्ववस्थासु मनोहारि चित्ताकर्षकं हृदयाह्लादकमनया व्यङ्ग्यव्यञ्जकभावसद्भावसंवलनया रसोद्भावनया भूयोभूयो रसाद्यनुसन्धानात्मकचित्तवृत्त्या वरीवर्तीति।

**साहित्यं सर्वशास्त्राणां सरसप्रतिपादकम्।**
**असाहित्येन यत्किञ्चित्प्रवृत्तं तन्न सुन्दरम्॥ २३॥**

शब्दार्थसहभावसम्भावितं तदेकान्तमनोरमं साहित्यं नाम सर्वशास्त्राणां वेदागमतन्त्रदर्शनादिनिखिलशास्त्रीयसिद्धान्तानां सरसप्रतिपादकं रससहितप्रतिपादनपरं

रसीभावसम्पादनेन वर्णनविषयतापादकं सौकुमार्येण सुकुमारमतिप्रत्यायकं कविकर्मधर्मनिरूपकं चास्तीति शेषः। यच्च किञ्चित् साहित्येतरद् वस्तु असाहित्येन साहित्यातिरिक्तेन भावेन असहभावोद्भावितेन पथा प्रवृत्तं प्रवृत्तिमधिगतं व्यवहृतं तन्न सुन्दरं तादृशं नीरसं वस्तु सौन्दर्याधायकं न भवतीति शेषः।

**सामान्याद् वा विशेषाद् वा सर्वत्र जगतीतले।**
**सौन्दर्यसृष्टिसन्मूलं साहित्यं सत्यमुच्यते ॥ २४ ॥**

सामान्यासामान्यसम्बन्धात् साधारणयोगानुयोगात् समानभावसंसर्गात्सामान्यवर्णनाद् वा विशेषाद् वा वैशिष्ट्याधायकाद् विशेषसम्बन्धनिबन्धनाद् वा जगतीतले भुवनेऽस्मिन् सर्वत्र सर्वतोभावेन सौन्दर्यसृष्टेः सौन्दर्यवतः सर्गस्य रमणीयतापादकवर्णनात्मकसर्जनस्य सद् विद्यमानं सम्यक् साधु समीचीनं मूलं स्रोतो हेतुर्वा साहित्यं कविकर्मधर्मसम्पृक्तं सहभावभावितं शब्दार्थसवलितं काव्यात्मकं सत्यं परात्मप्रकाशवदनुभूतियाथार्थ्यसाक्षात्कृतं परमार्थसारमित्युच्यते सहृदयसुधीभिरिति शेषः।

**यत्र लोकस्य विश्रान्तिर्भावानां यत्र चारुता।**
**श्रुतीनां पूर्णता यत्र तत्साहित्यं सुखास्पदम् ॥ २५ ॥**

यत्र यस्मिन् साहित्यालोके लोकस्य लोक्यमानजातिनामरूपात्मकव्यवहारविशेषितस्य चैतन्यधर्मस्य विश्वस्य विश्रान्तिः सर्वविधश्रान्त्यपनोदनं निरतिशयसुखावाप्तिः स्वर्गीयशान्तिपराप्तिश्चेतोनैरुज्येन परा निर्वृतिर्भवति, यत्र च भावानां पदार्थानां भावात्मकानां वस्तुजातानां सुन्दरासुन्दरत्वोभयविधानां चारुता रमणीयता नित्यनवीनता चमत्कृतिजनकता भवति, तथा च यत्र साहित्यसन्दर्भे श्रुतीनां श्रुतिविषयीकृतानां वेदादीनां शब्दप्रधानानां शास्त्राणां श्रवणोचितानां तदितरेषां मनआदीन्द्रियगोचराणां विषयाणां च पूर्णता पूर्तिः पूर्णभावापत्तिः परितः पूर्णत्वप्रवृत्तिर्वर्णनाकारप्रकारपरिष्कारेण पूर्णस्वरूपाभिव्यक्तिर्वा भवति तत् प्रतिष्ठितं श्रुतिविश्रुतं लोकोत्तरं शब्दार्थसहभावसङ्गतिकं साहित्यं सुखास्पदं सकलकरणविश्रान्तिजननक्षमानिर्वचनीयानन्दस्थानं निरवसानं नित्यनवायमानं सहृदयहृदयप्रमाणकं प्रतिष्ठामधितिष्ठति प्राणिलोकेऽस्मिन्निति सर्वनिर्दुष्टं सर्वमान्यं काव्यशास्त्रविदामभिमतं साहित्यलक्षणं संगच्छत इति दिक्।

# सौन्दर्यविमर्शः

शब्दार्थयोर्यत्साहित्यं तच्च सौन्दर्यमन्तरा चमत्काराधायकं न भवतीति कृत्वा किं सौन्दर्यमिति जिज्ञासायां तल्लक्षणं तावन्निरूप्यते—

**सुन्दरस्यैकदेशित्वाद् गुणत्वादुपचारतः ।**
**सौन्दर्यं तत्र शब्दार्थसाहित्ये विनिवेश्यते ।। १ ।।**

सुन्दरेति । सुन्दरस्य सौन्दर्यवतः पदार्थस्य चित्ताकर्षकस्य मनोरमस्य रमणीयस्य वस्तुनो वा, एकदेशित्वादेकांशे विद्यमानत्वात्तद्धर्मतया च, गुणत्वाद् गुणरूपत्वादप्रधानत्वाच्च, उपचारत आरोपितधर्मतः, सादृश्यातिशयेनाभेदेनोपचरितरूपत्वादित्यर्थः । सौन्दर्यं चमत्कारत्वापरपर्यायं सुन्दरत्वगुणरूपं तत्र सुप्रसिद्धे प्रक्रान्ते शब्दार्थसाहित्ये शब्दार्थयोः सहभावेन सम्पद्यमाने काव्यात्मके शब्दार्थसमसमुदयसम्पन्नस्वरूपे विनिवेश्यते विशेषनिवेशविधिना सन्निधीयते । तत्र विशेषो रचनात्मकवर्णनाधर्मगतः, निवेशोऽत्र शब्दार्थसङ्घटनविधानात्मकः । कैरिति काव्यकृद्भिः काव्यतत्त्वविद्भिश्चेति शेषः । तेन च सुन्दरं चमत्कारवत्काव्यसाहित्यं सम्पद्यते सौन्दर्यसन्निधानेनेति भावः ।

**सुन्दरत्वेन यत्ख्यातं तदन्यद्वस्त्वसुन्दरम् ।**
**तदेतदुभयं लोके साहित्ये त्वन्यथा प्रथा ।। २ ।।**

सुन्दरेति । सम्प्रति लोकगतं साहित्यगतं च सौन्दर्यं भिन्नमिति निर्दिश्यते—लोके यद् वस्तु सुन्दरत्वेन सौन्दर्यवदात्मगुणेन ख्यातं ख्यातिं प्रसिद्धिमवाप्तं लौकिकानां पदार्थानां मध्ये, तदन्यत्ततः सौन्दर्यवतो वस्तुनो यदन्यद्वस्तु पृथग्भूतं सुन्दरवस्तुव्यतिरिक्तं निखिलं वस्तुजातमसुन्दरं सौन्दर्यगुणहीनं सुन्दरत्वच्युतमिति व्यवह्रियते । तदेतदुभयं तादृशोभयविधं सुन्दरत्वासुन्दरत्वात्मकं व्यवहारविधानं लोक्यमानधर्मवति लोक एव पर्यवसीयते, तस्य लोकव्यवहारमात्रपर्यवसितत्वात् । एतदतिरिक्तं साहित्ये शब्दार्थसहभावसंवलितकाव्यात्मके जगति, त्विति लोकात्साहित्यव्यवच्छेदार्थम् । लोकादन्यथा भिन्नभावेन लोकव्यवहारव्यतिरिक्तविधिनेत्यर्थः । प्रथा प्रथमानपरम्परा परिपाटी रूढिरिति यावत् । सौन्दर्यतत्त्वबोधविषयिका लोकस्थितिरन्या काव्यसाहित्यादस्तीति शेषः ।

**वर्णाः पदानि वाक्यानि साहित्ये निखिलान्यपि ।**
**संदृब्धानि प्रशस्यन्ते सौन्दर्यातिशयान्वयात् ।। ३ ।।**

वर्णा इति । वर्णाः कुचुटुतुप्वादयो वर्णसमाम्नायाः, पदानि सुप्तिङन्तानि वर्णसमुदायात्मकानि, वाक्यानि पदसमूहात्मकानि क्रियान्वितानि, एतानि निखिलान्यपि समस्तानि वर्णपदवाक्यत्वविशिष्टानि शाब्दसन्दर्भोद्भावितानि साहित्ये शब्दार्थोभयात्मककाव्यलक्षणे संदृब्धानि सम्यगारचितानि कल्पितानि सन्निवेशितानि च प्रशस्यन्ते प्रशस्तिं भजन्ते प्रशस्यमानपदवीमधिगच्छन्ति । तत्र हेतुरुच्यते—सौन्दर्यातिशयान्वयादिति हेतोः । सौन्दर्यस्य सौष्ठवस्य कमनीयकवनवैशिष्ट्यस्य योऽतिशय आधिक्यं प्रसरः प्राचुर्यं वा, तस्यान्वयात्सम्बन्धात्संसर्गाच्च सर्वाण्यपि साहित्यगतानि रमणीयान्येव विशिष्यन्त इति भावः ।

लोके सुन्दरत्वेनासुन्दरत्वेन वा ख्यातानि निखिलान्यपि वस्तूनि वर्णपदवाक्यतया काव्यसाहित्ये सन्निवेशितानि सौन्दर्यवन्ति भवन्तीत्यभिप्रायः ।

**सौन्दर्यसृष्टिसाराणां पदार्थानां निदर्शनम् ।**
**साहित्यं सुचिरं नव्यं काव्यमालक्ष्य लक्ष्यते ।। ४ ।।**

सौन्दर्येति । सौन्दर्यसृष्टेः सुन्दरत्वगुणगुम्फितस्य सर्गस्य सौन्दर्यसम्भृताया रचनायाश्च साराणां तत्त्वभूतानां मूलोल्लासिरूपाणां वा पदार्थानां वस्तूनां वर्ण्यपदभाजां निदर्शनं निःशेषदृश्यभाजनं दृष्टान्तकरणं सामग्र्येणोदाहरणं च साहित्यं शब्दार्थसहभावोद्भासितं तदाख्यं लोकोत्तरं सरसं वस्तु सुचिरं नव्यं सुष्ठु चिरन्तनं नवीनं सुन्दरं नित्यं नवं चैतत् तादृशमेव सुष्ठु नित्यनवीनं काव्यं कविकर्मालक्ष्योद्दिश्य लक्षणविषयीकृत्य लक्ष्यते निरूप्यते लक्ष्यतावच्छेदकतया प्रतिपाद्यते ।

वस्तुतस्तु साहित्यं काव्यञ्चेत्युभयं पर्यायमात्रभिन्नं तत्त्वतोऽभिन्नं काव्यसाहित्यमित्यभिधानप्रतिष्ठं सचेतसां चेतोनिविष्टं तिष्ठतीति तात्पर्यमवसातव्यम् ।

**तादृक्सृष्टिविधातारो विधातृकृतसृष्टितः ।**
**सम्भारानाददानास्ते विशिष्यन्ते ततोऽधिकम् ।। ५ ।।**

तादृगिति । तादृक्तादृशोक्तप्रकारकसौन्दर्यसारसमवायसमवेतायाः, सृष्टेः सर्गस्य काव्यात्मकनिर्माणस्येति यावद् । विधातारो विधानेन कर्तारः काव्यौपयिकसामग्र्या निर्मातार इति भावः । विधात्रा ब्रह्मणा जगद्विधानकर्त्रा कृताया विहितायाः सृष्टितः सर्गतः सम्भारान् निर्माणानुकूलोपकरणपदार्थान् काव्यसृष्टिविधानोपयुक्तसौन्दर्यवत्सामग्रीविशेषानित्यर्थः । आददाना संगृह्णन्तः स्वीकुर्वाणाश्च

ते पूर्वोक्ता विष्वग्विश्वविश्रुता काव्यसृष्टिकर्तारः कवयः, ततो विधातृकृतसृष्टितोऽधिकं सातिशयं यथा स्यात्तथा समन्ततस्ततोऽपेक्षयाऽऽतिशय्यं सन्दधाना विशिष्यन्ते वैशिष्टयमातन्वते विशेषानादधते नियतिकृतनियमराहित्येन लोकोत्तरत्वं भजन्ते ।

**यदर्थं सस्पृहो लोको यदाप्तुं परमोत्सुकः ।**
**यदाप्य परिभुज्यापि सोत्कण्ठस्तद्धि सुन्दरम् ।। ६ ।।**

यदिति । यद् वस्तु नित्यनवायमानमनुत्तमं लोकोत्तरं सद् यस्यार्थं यस्य तादृशस्य कमनीयतमस्य वस्तुनः कृते लोको जनः प्राणिसमुदायः सस्पृहः साभिलाषः सविशेषमनवरतं समीहमानः । किञ्च यदाप्तुं यद् वस्तु विशिष्टमवाप्तुमधिगन्तुं वा परमोत्सुकः सातिशयमुत्कण्ठापरायणोऽत्यन्तमौत्सुक्यवान् भवतीति शेषः । यद् वस्तु तादृशमाप्याधिगम्य परिभुज्य परितो भुक्तिविषयीकृत्य निरन्तरमास्वाद्यमानतामानीय दर्शनरसनस्पर्शनादिविधया विशेषतः प्रतिक्षणमक्षिलक्ष्यीकृत्यापि सोत्कण्ठ उत्कण्ठयान्वितः सततमुत्कलिकोन्मुखो लोको भवति तद् विशिष्टलक्षणलक्षितं वस्तु सुन्दरं सौन्दर्यवदुच्चैस्तरमनुत्तरं सौन्दर्यगुणगरिमगरिष्ठमुच्यते । हीति ध्रौव्यार्थकम् । नैरन्तर्यं नवीनं दृश्यश्रव्यसमीचीनं सुखास्पदं वस्तु लोकोत्तरं सुन्दरमित्युच्यते, तच्च काव्यात्मकमिति ।

**निर्गलद्रसनिर्व्यूढं गुणालङ्कारसञ्चितम् ।**
**निर्दुष्टं भावभूयिष्ठं काव्यसाहित्यमेव तत् ।। ७ ।**

निर्गलदिति । निश्शेषेण गलन्निस्यन्दमानो यो रस्यते आस्वाद्यते रस्यमानतयाऽऽस्वादविषयीकृतो रस आस्वाद आह्लादजनकश्चमत्कृतिप्राणस्तेन निर्व्यूढं निःशेषतया परिक्लृप्तमनुस्यूतं परिप्लुतं वा । गुणैर्माधुर्यादिभिरलङ्कारैरनुप्रासोपमादिभिश्च सञ्चितं सम्यक् चितं व्याप्तं रसानुगुणतयोपस्कृतम् । निर्दुष्टं दोषरहितं नित्यच्युतसंस्कृत्यादिदोषवर्जितम् । भावभूयिष्ठं भावैर्विभावानुभावव्यभिचारिसात्त्विकादिभिर्भूयिष्ठं भूम्ना परिनिष्ठितं भूयो भाव्यमानस्वभावभावितमित्यर्थः । काव्यसाहित्यमेव काव्यं च तत् साहित्यं कविकर्म काव्यं तस्य शब्दार्थसहभावसंवलितं साहित्यं वा । तदेवेत्येवकारोऽन्ययोगव्यवच्छेदकः । तादृशमेवोपर्युक्तं काव्यसाहित्याभिधं नित्यनवीनं वस्तु सुन्दरं सौन्दर्यगुणाभिन्नं भवतीति भावः ।

**ममेदं च ममेदं न यावदेतादृशी मतिः ।**
**तावत्स्वपरभावेन वस्तु भाति न सुन्दरम् ।। ८ ।।**

ममेति । इदं पुरो दृश्यमानं वस्तु ममास्मत्सम्बन्धि मदर्थमुपयुज्यमानं वेति । इदं चैतत् तद्वैपरीत्येन न मम मत्सम्बन्धगतं मदर्थमुपसेव्यमानं वा नास्ति । चेति

भिन्नसम्बन्धक्रमबोधकं बोध्यम्। यावद् यदवधिपर्यन्तं यावत्सम्बन्धभेदावबोधककाल-मेतादृशी मतिर्ममत्वाममत्वावबोधिका बुद्धिर्भेदभावविनिविष्टा तिष्ठति, तावत्तदव-धिककालान्तं भेदात्मकबुद्धिमत्समय इति यावत्। स्वपरभावेन स्वमात्मीयं परं च परकीयमिति स्वपरे तयोर्भावेन स्वपरत्वेन हेतुना वस्तु परिमितस्वरूपं किमपि रमणीय-मरमणीयं वा लौकिकमलौकिकं वा भोग्यमभोग्यं वा वस्तु पदार्थापरपर्यायं सुन्दरं सौन्दर्यवदभिन्नं न भाति भानविषयतामुपयाति प्रतीतिविषयीभवतीति।

**तदेतत्परिहारेण साधारण्येन सर्वदृक्।**
**काव्यमेवेति साहित्ये सौन्दर्यं सम्प्रतिष्ठते ॥ ९ ॥**

तदिति। तत्तस्माद्धेतोरेतत्परिहारेणैतस्य ममत्वाममत्वरूपस्वपरभावपरित्यागेन अपरिमितस्वभावेनेत्यर्थः। साधारण्येन साधारणभावेन सामान्येन साधारणीकरणात्मना व्यापारेण व्यङ्ग्यव्यञ्जकभावसम्बन्धेन सर्वदृक् सर्वत्रदृष्टिमत्सर्वसामान्यदर्शनं सर्वसहृदयजनग्राह्यमिति भावः। तदेतादृशं काव्यमेव शब्दार्थसहभावभावितं दृश्य-श्रव्यात्मकं रसगुणालङ्कारादिवैशिष्ट्यनिरूपितं कविकर्म वेत्येवकारेण स्वेतरव्यतिरेको व्यज्यते। इत्यतो हेतोः साहित्ये काव्यसाहित्ये वर्णनात्मकशब्दार्थसमुदये साहित्यसन्दर्भे सौन्दर्यं सुन्दरत्वगुणो रमणीयभावः परमाह्लादजनकः सम्प्रतिष्ठते, सम्यक् प्रतिष्ठामा-सादयति समन्तात्प्रतिष्ठितो भवतीति।

**सौन्दर्याधायकं काव्यसाहित्यं चेत्प्रतिष्ठितम्।**
**तदन्यन्निखिलं शास्त्रं किमग्राह्यमसुन्दरम् ॥ १० ॥**

सौन्दर्येति। ननु सौन्दर्यस्य सुन्दरत्वगुणस्याधायकमासमन्तादाधारकं चेद् यदि काव्यञ्च तत्साहित्यं काव्यस्य साहित्यं वा प्रतिष्ठितं प्रतिष्ठामधिगतं प्रतिष्ठायां स्थिरीकृतं वा सौन्दर्यतत्त्वविद्भिः काव्यसाहित्यविद्वद्भिरिति शेषः। ततश्च तस्मात्का-व्यसाहित्यादन्यदितरन्निखिलं वेदस्मृतिपुराणादिकं शासनाच्छास्त्रमित्यभिधीयमानं किमग्राह्यम्? किमु ग्रहणायोग्यम्? श्रवणमननाध्ययनानर्हमनुपादेयमनावश्यकं वा? किं वा तस्मात्काव्यसाहित्यादतिरिक्तं सर्वं वेदादिशास्त्रं पौरुषेयापौरुषेयमसुन्दरम्? सुन्दरत्वगुणहीनमाह्लादजनकत्वाभावादनावर्जकमनुपयुज्यमानं वा स्यादिति चेदुच्यते—

**नैतदूह्यं यतश्शास्त्रोच्चयस्तत्त्वप्रमाणकः।**
**काव्यसाहित्यमेकान्तं सौन्दर्यज्ञानसाधकम् ॥ ११ ॥**

नैतदिति। एतत्काव्यसाहित्येतरदन्यन्निखिलं शास्त्रमग्राह्यमसुन्दरमिति नोह्यम्, न वितर्क्यं न शङ्क्यमिति भावः। यतश्च हेतोः शास्त्राणां वेदस्मृत्यागम-

पुराणप्रभृतीनामुच्चय उच्चयनादुच्चयः समूहः संग्रहो वा, तत्त्वं निगूढं रहस्यं पारमार्थिकं स्वरूपं वा प्रमाणयतीति तत्त्वप्रमाणकः परमात्मतत्त्वबोधकः, अध्यात्मदिगुन्मीलक आत्मानात्मभेदनिरूपको निःश्रेयससाधको वा निरूपितः परमतत्त्वदर्शिभिः शास्त्रकृद्भिरिति शेषः। काव्यसाहित्यं तु शब्दार्थसहभावसंवलितं सदेकान्तं कैवल्येनातिशयमात्यन्तिकमनिवार्यतया च सौन्दर्यज्ञानसाधकं सुन्दरत्वगुणबोधसाधनभूतं सौन्दर्यतत्त्वनिरूपणात्प्रतिष्ठापितं काव्यसाहित्यमर्मवेदिभिः सुधीभिरिति।

**अन्यच्चेत्थं समास्थेयं समग्रं सुन्दरं श्रुतम्।**
**काव्यसाहित्यमेवैतत्सौन्दर्यात्मकसृष्टिकृत् ॥ १२ ॥**

अन्यदिति। अन्यत्तदतिरिक्तं समाधानं तत्त्वप्रमाणकं शास्त्रं सौन्दर्यज्ञानसाधकं काव्यसाहित्यमित्यतोऽन्यदुत्तरमेतादृशं समास्थेयं सम्यगाकलनीयं सम्यक्त्वेन मनस्यास्थाप्य समाधानान्तरप्रकारसूचकम्। यतश्च समग्रं सकलं श्रुतं श्रुत्यादिशास्त्रं सुन्दरं सौन्दर्यगुणान्वितम्, समुचितस्वनिहिततत्त्वार्थसार्थप्रकाशनक्षमत्वादिति भावः। परं ह्येतत्प्रकरणप्रतिपाद्यं वर्ण्यविषयत्वेन निर्दिश्यमानमिदं काव्यसाहित्यमेव केवलं कविकर्तृकशब्दार्थसहभावगुम्फितमनुत्तरं लोकोत्तरं सदेकं सौन्दर्यात्मकसृष्टिकृत् सौन्दर्यगुणवदद्भुतमनोहारि सर्गविधानकारि परिकल्पितं पर्यवस्थापितं वा पार्यन्तिकसौन्दर्यशास्त्रममज्ञैरभिज्ञैरिति समाधेराशयः।

**साहित्यं सर्वगं लोके शास्त्रे शब्दार्थवत्तया।**
**व्यञ्जकत्वाश्रयेणैतत्काव्यसाहित्यमुच्यते ॥ १३ ॥**

साहित्यमिति। साहित्यं किल काव्यसाहित्यस्वरूपपर्यवसितं कथमित्युच्यते—शब्दार्थसहभावभावितं साहित्यं खलु सर्वं गच्छतीति सर्वगं सर्वसहृदयसामान्यं सार्वजनीनमाबालयुवस्थविरमाह्लादयितुमलं भवतीति शेषः। तच्च तस्य सर्वगत्वं शब्दार्थवत्तया शब्दनाच्छब्दोऽर्थ्यमानतया चार्थस्तयोः सम्बन्धेन क्वचिच्छब्दप्राधान्येन, क्वचिदर्थप्राधान्येन क्वचिच्चोभयसामान्येन लोक्यमाने लोके जगति शास्यमाने शास्त्रे श्रुत्यादौ चोभयत्र संगच्छते। तदेतदेतादृशमुपर्युक्तप्रकारकं साहित्यं व्यञ्जनाव्यापारसंयोगनिबन्धनेन वा काव्यसाहित्यं काव्यप्रधानं साहित्यं काव्यमयं तद्रूपं तदात्मकं वा साहित्यमुच्यतेऽभिधीयते लक्षणलक्ष्यीक्रियत इति।

**वस्तुतो दृष्टिभेदेन सुन्दरासुन्दरत्ववत्।**
**विश्वं विभजते भूयो नामरूपक्रियात्मकम् ॥ १४ ॥**

वस्त्विति। वस्तुतस्तत्त्वतो यथार्थतो वस्तुदृष्ट्या च दृष्टिभेदेन दर्शनक्रमभेदावबोधेन तत्तद्दिगुन्मेषविशेषनिमेषेण स्थूलदृशोपात्तभिदोद्बोधनेन वा सुन्दरत्वं सौन्दर्य-

गुणत्वमसुन्दरत्वं तदितरच्च तद्वत्, तत्सम्बन्धानुबन्धीत्यर्थः। तादृशदर्शनभेदोद्भूत-सौन्दर्यासौन्दर्ययोगानुयोगेनैतद् विश्वं विष्वग्भूतं विष्वग्व्याप्तं वा जगन्नामरूपक्रिया-त्मकं नामाभिधानं संज्ञात्मकं रूपं दृश्यमानं व्यक्त्यात्मकं क्रिया क्रियमाणं व्यापारात्मकं तत्त्रिधाविभक्तं सद् भूयो भूयसाऽसंख्यभावेन विभजते, विभक्तिमापाद्यते, शतधा सहस्रधा वा विभागमुपगच्छतीति भावः। भूय इत्युभयथा योज्यम्।

**तच्च शब्दमयं सर्वं नानार्थपरिकल्पितम्।**
**साहित्यं व्यक्तिमापन्नं सदेकान्तेन सुन्दरम्॥ १५॥**

तदिति। तदिति प्रक्रान्तं नामरूपक्रियात्मकं विश्वम्। सर्वं समस्तं शब्दमयं शब्दरूपं स्फोटात्मकं शब्दात्मकाभिव्यक्तिस्वरूपत्वात्। अपि च नानार्थपरिकल्पितं नानाऽनेकविधैरर्थैर्वस्तुभिर्घटादिभिः कान्तादिभिर्वा परिकल्पितं परितः कल्पनोद्गतं परितः सर्वतोभावेन स्मृतं स्मृतिविषयीकृतं बुद्धित्वावच्छिन्नतया प्रकाशीकृत्यावबुद्धं वा। साहित्यं शब्दार्थसहितं तदुभयपरिकल्पितं च व्यक्तिमभिव्यक्तिं वर्णनोपस्कृत्या प्रकाशपदवीमित्यर्थः। आपन्नमधिगतमभिव्यञ्जनयोपात्तं सत् सत्यं सम्यक् साधु संस्कारसन्निविष्टं चैकान्तेनात्यन्तिकतया निरवद्येन निरतिशयाह्लादसंवादसम्पादक-त्वेनेत्याशयः। तदेतादृशं रामणोयकसन्दर्भगर्भं साहित्यं सुन्दरं सौन्दर्यवद्गुणगरिम-गरिष्ठं भवतीति शेषः।

**वस्तुनि क्वचिदप्येतत्सौन्दर्यं सत्तिरोभवत्।**
**येनाविष्क्रियते तच्च साहित्यं कविकर्मजम्॥ १६॥**

वस्तुनीति। क्वचिदपि कस्मिंश्चिदपि लौकिकेऽलौकिके वा पदार्थे, एतन्निर्दिश्य-मानमुपर्युक्तं च सौन्दर्यं सुन्दरत्वगुणः सद्विद्यमानमपि निगूढं सूक्ष्मं वा वर्तमानं तिरोभव-त्प्रत्यक्षतोऽदृश्यमानं नाक्षिलक्ष्यीक्रियमाणं चेदनाविष्कृतं तिष्ठति, तदा च येन कमनीय-कारेणन रम्यमाध्यमेन वाऽविष्क्रियते अभिव्यक्तिं नीयते, वर्णनविषयीकरणविधिना व्यक्तीक्रियते, तच्च तादृशं रमणीयवर्णनव्यापारवैशिष्ट्यविशेषितं कविकर्मजं कवेः काव्यकर्तुः कर्म क्रियात्मकं काव्यमेव तस्माज्जातं कविक्रियात्मककाव्यसम्भूतं साहित्यं शब्दार्थसहभावसमूहितं काव्यस्वरूपाभिन्नं तादात्म्योपेतं कान्तासम्मितं तद्धि साहित्यं सौन्दर्यतत्त्वाविष्कारकं मन्तव्यमिति भावः।

**परिणामतया सर्वं सुन्दरं काव्यसङ्गतम्।**
**तदसङ्गतिकं दृष्ट्या दृश्यमानमसुन्दरम्॥ १७।**

परिणामेति। परिणामतया फलनिष्पत्त्या रसास्वादफलावाप्तिसम्पत्त्येति भावः। काव्यसङ्गतं कविकर्मसाङ्गत्यमवाप्तं काव्यसन्दर्भसंयुक्तं काव्यवर्णनाविषयीकृतमित्यर्थः।

सर्वं सुन्दरमसुन्दरं वा लौकिकमलौकिकं वा चेतनमचेतनं वा यत्किमपि वस्तुजातं सुन्दरं सौन्दर्यगुणधर्मसन्निवेशविशेषपेशलं भवतीति शेषः। तद्वैपरीत्येन च तदसङ्गतिकं तेन काव्येन नास्ति सङ्गतिः संयोगः साक्षात्सम्बन्ध इति तदसंयोगजम्, किञ्च दृष्टया स्थूलदर्शनेन चर्मचक्षुषा च दृश्यमानं निर्वर्ण्यमानं स्थूलदृष्टिसृष्टिविषयीकृत्यावलोक्यमानं सर्वमित्युभयथा योज्यम्। समग्रं सांसारिकं वस्तुजातमसुन्दरं सौन्दर्यगुणहीनं भवतीति शेषः। यद् यत्काव्यसङ्गतं तत्तत्सुन्दरम्, यन्न तथा तदसुन्दरमिति भावः।

**अनादिनिधनः साक्षात्परमात्मा कवीश्वरः।**
**विश्वरूपमिदं काव्यं प्रणीतं चिरसुन्दरम् ॥ १८ ॥**

अनादीति। नादौ निधनं विनाशो यस्य सः अनादिनिधनः शाश्वतनित्यसत्यात्मकः, सर्वशक्तिमदनन्तब्रह्माण्डनियामकः, साक्षादव्यवहितस्वरूपेण परोक्षापरोक्षोभयविधप्रविधानमूलहेतुकत्वेनेत्यर्थः। परमात्मा परात्परतरो विभुः परमश्चासावात्मा सर्वात्मस्वरूपो जगन्नियन्ता कवीश्वरः कवीनामीश्वर ईशिता कविश्चासावीश्वरः कवीन्द्रः कविस्रष्टेत्युच्यते। "कविर्मनीषी परिभूः स्वयम्भूः" इति श्रुत्युक्तेः। इदं च पुरो दृश्यमानं नामरूपक्रियात्मकं विश्वरूपं जगदात्मकं काव्यं परमात्मकविकर्मसमुद्भूतं प्रणीतं प्रकर्षेणोन्नीतं प्रणयनपाटववैशिष्ट्येन संसृष्टं परमात्मना सता चिरसुन्दरं नित्यमनोरमं सौन्दर्यगुणोत्कृष्टं प्रतिभातीति शेषः।

**तत्र साहित्यसद्भावप्रकाशनपरायणाः।**
**सौन्दर्यं संविचिन्वन्तः कवयन्तश्च केऽपि ते ॥ १९ ॥**

तत्रेति। तत्र परमात्मप्रणीते चिरसुन्दरे विश्वरूपेऽस्मिन् काव्ये साहित्यस्य शब्दार्थसहभावसमुदितस्य काव्यात्मकस्येत्यर्थः। ये सद्भावाः सम्यग्गुम्फिता सत्त्वेन निरूपिता वा विभावादयो भावरूपाः काव्यविषयीकृतास्तेषां प्रकाशनं काव्याभिव्यक्तीकरणं वर्णनप्रकर्षेण प्रत्यक्षत्वापादनं वा परमुत्कृष्टमेकमात्रमयनं स्थानं कर्माराधनं येषां ते, अथवा साहित्येन सद्भावस्य स्नेहसौख्यसौहार्दसौमनस्यसामञ्जस्यादिसुष्ठुसृष्टेः प्रकाशने प्रसारणेऽभिव्यञ्जने वा परायणाः सततसंलग्ना ये तादृशाः केऽपि लोकोत्तरा वागविषया विचक्षणास्ते विश्रुता वाल्मीकिव्यासभासकालिदासादयः कवयः कवयितारः काव्यकरणकुशलाः सौन्दर्यं वस्तुगतं सुन्दरत्वगुणं विश्वकाव्यानुगतं लौकिकमलौकिकं वा संविचिन्वन्तः सम्यक् परिशीलयन्तोऽनुसन्दधानाः कवयन्तः काव्यं कुर्वन्तः काव्यकर्ममर्म प्रकाशयन्तः सन्तीति शेषः।

**सौन्दर्यं भावनारूपं सा चेयं भाव्यते हृदा ।**
**तेन तन्निष्ठता तस्य रूपादौ तूपचर्यते ।। २० ।।**

सौन्दर्यमिति । सौन्दर्यं सुन्दरत्वगुणश्च भावनारूपं भाव्यते भावतोऽनुभूयतेऽनयेति भावना वासना संस्कारविशेषः, तादृशं भावनात्मकं वासनारूपसंस्कारनिष्ठं सौन्दर्यमित्युक्तम् । सा चेयं सौन्दर्योद्भावनपरा भावना हृदा चेतसा चैतन्यप्रकाशितेन मनसा भाव्यते भावविषयीक्रियतेऽनुभूयते चित्तेन साक्षात्क्रियते वा ! तेन हृदा भाव्यमानेन हेतुना तस्य सौन्दर्यस्य तन्निष्ठता भावनाविषयता हृद्गतवासनानिविष्टतेत्यर्थः । तदेतादृशं भावनागतं सौन्दर्यं रूपादौ रूपरसगन्धस्पर्शादिविषयेषु स्थूलाकारेषु त्वित्यवास्तवार्थे । उपचर्यते उपचारत आरोपितव्यवहारतो व्यवसीयते । उपचरितक्रियया व्यवह्रियते, न तु वस्तुतोऽध्यवसीयते । रूपस्य रूपत्वं रसस्य माधुर्यं गन्धस्याघ्राणं स्पर्शस्य स्पर्शनं सुन्दरमित्यारोपितव्यवहारो न तु वास्तविक इति भावः ।

**भावना वासनाऽऽख्याता सा च संस्कारसंस्कृता ।**
**हृन्मनश्चात्मसंयोगात्तदधिष्ठानमिष्यते ।। २१ ।।**

भावनेति । भावना भाव्यमानस्वरूपा व्यापारविशेषः क्रियात्मिकेत्यर्थः । सा च भावना, संस्कारेण सम्यक्करणव्यापारेण सम्यगाधानानुसन्धानादिकर्मसहकृतपरिष्कारेणेत्यर्थः । संस्कृता संस्कारमापादिता सम्यक्परिष्कृता च वासना वसनानुकूलक्रियात्मिका बीजरूपेण प्राक्तनेदानीन्तनजननोपात्ता भावानुगताभिव्यक्तिग्राह्यरूपाऽऽख्याता समन्तात्ख्यातिमागता प्रसिद्धिमिता तत्तच्छास्त्रेषु शास्त्रकृद्भिरिति शेषः । हृदिति मनो मननात्मकमित्युच्यते । चेति तदुभयानुकर्षकम् । तदेव हृद्रूपं मन आत्मसंयोगादात्मनश्चिदात्मकस्य चैतन्यप्रकाशरूपस्य विभोः सम्बन्धात् तदधिष्ठानं तस्या वासनापरपर्यायाया भावनाया अधिकृतावासभूमिरिष्यते स्वीक्रियते तत्त्वज्ञैरिति शेषः ।

**ततो यन्मनुते सम्यङ् मनसा संस्कृतेन तत् ।**
**सुन्दरं भाति लोकेऽस्मिन् तत्परं स्यादतादृशम् ।। २२ ।।**

तत इति । यतश्च भाव्यमानरूपाया भावनाया आत्मसंयोगान्मनोऽधिष्ठानं ततो हेतोर्यद्वस्तु किमपि लौकिकं लोकोत्तरं वा संस्कृतेन संस्कारसंवलितेन सम्यक्परिष्कृतेन मनसा हृदा मननधर्मिणा सता सम्यक् सुष्ठु साधु समीचीनं वा मनुते मननानुकूलतया स्वीकुरुते मननादङ्गीकुरुते वा, तद् वस्तु मनोमननसङ्गीकृतं लोकेऽस्मिन् जगत्यामस्यां सुन्दरं रमणीयं सौन्दर्यगुणोत्कृष्टं भाति भानविषयीभवति प्रतीतिपथमवतरतीत्यर्थः । अर्थाद् यत्र मनो रमते, तद् रमणीयमिति भावः । तत्परं तस्मान्मनोमननानुकूलव्यापारात्परमन्यदतादृशं तादृशसुन्दरत्वगुणहीनमसुन्दरं वा स्याद् भवेत् । यन्मनोऽननुमतं तदसुन्दरमित्याशयः ।

**काव्यसाहित्यसंस्काराच्चेतसैतत्सचेतसः ।**

**सर्वं सौन्दर्यसम्पृक्तं मन्वते सचराचरम् ।। २३ ।।**

काव्येति । काव्यं कविकर्म तच्च कविकर्मानुकूला कृतिः, तत्कृतं तद्रूपं तत्सम्बन्धि वा साहित्यं शब्दार्थसमप्राधान्यनिरूपितं तस्यैतादृशस्य काव्योन्मीलित-कमनीयशब्दार्थसमुदयसन्दर्भस्य संस्कारात्सम्यक्परिष्काराज्जन्मान्तरेदानीन्तनवासनो-न्मेषाद्धेतोः सचेतसः समानं साधारणीकृतं संवादसहकृतं चेतो येषां ते तथाभूताः सहृदयाः काव्यसाहित्यतत्त्वविदः, चेतसा चेतनधर्मवता चिदुन्मुखेन मनसा एतत् पुरो दृश्यमानं मनोबुद्धिचक्षुर्योगेन साक्षात्क्रियमाणमित्यर्थः । सर्वं लौकिकमलौकिकं वस्तुजातमयं सचराचरं चेतनाचेतनात्मकं चरेण गतिमताऽचरेणागतिकेन सहितं जडचेतनमयमित्यर्थः । तदेतादृशं जगत् सौन्दर्यसम्पृक्तं सुन्दरत्वगुणान्वितं मन्वते स्वीकुर्वते पश्यन्ति स्वानुभवगोचरीकुर्वन्ति ।

**साहित्यं किञ्च सौन्दर्यं द्वयमन्योन्यपूरकम् ।**

**एकमन्यद् विना नैव प्रतिष्ठां लभतेतराम् ।। २४ ।।**

साहित्यमिति । साहित्यं सौष्ठवेन समुचितशब्दार्थसहभावभावितं काव्यात्मकं सत् किञ्चेत्युभयानुक्रमबोधनार्थम् । सौन्दर्यं सुन्दरैकदेशित्वात्सुन्दरत्वगुणः, द्वयमुभयं साहित्यं सौन्दर्यञ्चेति, अन्योन्यपूरकमन्यदन्यदित्यन्योन्यं पूरयति पूर्णं करोतीति पूरकं परस्परोपकारकत्वेन सहायकमुन्नायकमिति यावत् । एकमिति साहित्यं सौन्दर्यं वा, अन्यस्मात्पृथग्भूतसहायमनुपकृतं वा, अन्यद्विना साहित्यं सौन्दर्यमन्तरा सौन्दर्यं च साहित्यमन्तरा, प्रतिष्ठां प्रकृष्टस्थितिमुच्चतमसम्मानभूमिं नैव लभतेतरां ध्रुवमेव न प्राप्नोति, अर्थात् साहित्योपस्कृतं सौन्दर्यं सौन्दर्यानुप्राणितं साहित्यं च लोकेऽस्मिन् प्रतिष्ठामाप्नोतीति भावः ।

**साहित्यपूर्वकत्वाच्च सौन्दर्यं स्थितिमश्नुते ।**

**द्वयोस्तत्परमं लक्ष्यं तत्त्वमेकं रसात्मकम् ।। २५ ।।**

साहित्येति । साहित्यं शब्दार्थमयं पूर्वं प्रथमोपात्तं यस्य तत्साहित्यपूर्वकं तस्य भावस्तस्मात् प्रथमोपात्तसाहित्यसंयोगादिति भावः । सौन्दर्यं सुन्दरत्वगुणः स्थितिमस्तित्वं प्रतिष्ठां वाऽश्नुतेऽवाप्नोत्यधिगच्छति वा । यद्यपि साहित्यं सौन्दर्यं चेत्युभयमन्योन्यपूरकं परं सौन्दर्याधारभूतत्वात्साहित्यस्य पूर्वोपादानमिति भावः । द्वयोः साहित्यसौन्दर्ययोः परस्परोपकार्योपकारकभावेन संयुक्तयोराधाराधेयभावेन मिलितयोर्वा, तत्सुप्रसिद्धं परममुत्कृष्टं परमार्थस्वरूपं चैकमद्वितीयमेकत्वावच्छिन्नं रसात्मकं रस एवात्मा स्वरूपं यस्य तद् रस्यमानस्वरूपम् । "रसो वै सः[1]" इति श्रुत्युक्तेः । तत्त्वं तत्पदवाच्यं तद्भावरूपमाध्यात्मिकं निगूढं रहस्यं लक्ष्यं लक्षणीयं चरमस्थानमस्तीति भावः ।

---

१. तै० उ० ६.७।

# योगदृशा रसबोधविमर्शः

काव्यसौन्दर्यबोधकत्वेन शब्दार्थयोः सहभावः समपेक्ष्यते। काव्यगतं सौन्दर्यं च रसगुणालङ्कारादिभिः कामनीयकजनकैरुपपद्यते। यद्यपि "सौन्दर्यमलङ्कारः" इति वामनकृतालङ्कारलक्षणमेव सौन्दर्यघटकमुक्तम्, परं चमत्कारातिशयव्यञ्जकत्वेन सौन्दर्य-पदं व्यापकमर्थमनुसम्बध्नाति। तादृशचमत्कारातिशयाभिव्यञ्जकं सौन्दर्यं शब्दार्थयोः सहभावरूपं साहित्यमनुसरति। काव्यशास्त्रमेव साहित्यशब्देन व्यपदिश्यते। प्राक्काले काव्यशास्त्रमिदं काव्यालङ्कार इति व्यवह्रियमाणमभूत्, तदानीं निखिलाचार्यप्रणीत-ग्रन्थानां "काव्यालङ्कारः" इत्येव 'नाम' प्रसिद्धिमापत्। पश्चात्कालक्रमेणालङ्कारशास्त्र-मिति नामकरणं समजायत। अत्र शासनात् शास्त्रमिति व्युत्पत्तेरनुपपत्त्या शंसनात् शास्त्रमिति व्युत्पत्तिः संगच्छते। शासनात् शास्त्रमिति तु वेदादिष्वेवोपपुज्यते। तत्र भामहाद्याचार्यैः "काव्यालङ्कार" इति स्वग्रन्थाभिधानरूपेण प्रयुक्तम्। अनन्तरं प्रताप-रुद्रीयटीकायां तदेवालङ्कारशास्त्रमभिहितम्। पश्चादेकादशशताब्द्यां भोजदेवेन सरस्वती-कण्ठाभरणे स्वग्रन्थे काव्यशास्त्रमिति नाम संज्ञितम्। ततश्चतुर्दशशताब्द्यां विश्वनाथः काव्यशास्त्रस्य कृते 'साहित्यम्' इति प्रायुङ्क्त। यद्यप्यलङ्कारसर्वस्वकारो रुय्यकोऽप्ये-कादशशताब्द्यां साहित्यमीमांसाख्ये स्वग्रन्थे साहित्यमित्याख्यातवांस्तथापि तदप्रसिद्धे-स्तत्प्रयोगश्रेयोभाजनता तस्य नाभ्युपेयते। "शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद् द्विधा" इति भामहोक्तकाव्यलक्षणानुसारेण शब्दार्थयोः साहित्यं काव्यमिति साहित्यपदं प्रागेवोपलभ्यते। नवमशताब्द्यां राजशेखरेणापि काव्यमीमांसायां 'पञ्चमी साहित्यविद्या इति यायावरीयः' इत्युक्त्वा साहित्यं वेदाङ्गत्वेन विशेषितम्। अतश्च विश्वनाथ एवास्यापि प्रवर्तक इति नैतिह्यसिद्धं भवति। अथापि साहित्यं शास्त्रत्वेन दृढीकृत्योच्चैः पदमारोपितं तेनेति तदीयं तदर्थमवदानमुरीकर्तव्यम्।

अस्य साहित्यशास्त्रस्य कृते प्राचीनतरकाले 'क्रियाकल्पः' इति पदप्रयोगो वात्स्यायनकामसूत्रे, ललितविस्तराख्ये बौद्धग्रन्थे च समुपलभ्यते। तदर्थश्च तट्टीकाकृता काव्यकरणविधिः काव्यालङ्कारश्चेति विहितः। वाल्मीकिरामायणस्योत्तरकाण्डे लवकुशगीतश्रवणावसरे रामसभायां वैयाकरणनैगमादिभिः सह 'क्रियाकल्पविदः'

काव्यविदश्चेति पदद्वयं प्राप्यते। वस्तुतस्तु काव्यबीजं वेद एवोपलभ्यते—"पश्य देवस्य काव्यं न ममार न जीर्यति" इति श्रुत्युक्तेः काव्यतत्त्वानां सर्वत्र वेदमन्त्रेषु बहुश उपलब्धेश्च शब्दार्थयोः सहभावरूपस्य साहित्यस्यानादित्वमेव प्रतितिष्ठति।

अथ किं नाम साहित्यमित्यपेक्षायां सहितयोः शब्दार्थयोर्भावः साहित्यमित्युच्यते। हितं सौहित्यं वा सम्पादयत्साहित्यं काव्यमिति व्यपदिश्यते। अनयोः शब्दार्थयोः सामञ्जस्येनाऽन्यूनत्वेनानतिरिक्तत्वेन च शोभाशालित्वमुद्दिश्य मनोहारिणी कापि संस्थितिः साहित्यमित्युदीर्यते[1]। साहित्यं हि कदा प्रभृति वाङ्मयाधिकृतत्वेन काव्यजगति व्यपदेशमभजतेति तदीयमैतिह्यगतं तत्त्वं साहित्यपर्यालोचनप्रकरणे निरूपयिष्यते, सम्प्रति साहित्यान्तर्गतस्य रसस्य दिगुन्मीलनं क्रियते।

अथ कोऽयं रस इति विवेचनीयो विषयः। 'रसो वै सः', 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतिवचनात् श्रौतकालादेव रसः परमात्मस्वरूपतया वाङ्मयात्मत्वमभिप्रपेदे। ततः पश्चाद्—"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतमुनिप्रणीतं रससूत्रं काव्यजगति प्राधान्येन पदं न्यधत्त। तदेव सूत्रव्याख्यातॄणां नैकेषामाचार्याणां विविधविधप्रतिपादनशैलीभङ्गीविशेषेण विस्तरेण व्यापकतामवापत्। अधुनाऽपि कोऽयं रस इति प्रश्नः सहृदयानां मनीषिणां विवेचनाविषयतां प्रतिपद्यते। फलतः स्वातन्त्र्येण रसमेव विषयीकृत्य नैकमतसम्भृतविचारा ग्रन्थाश्च प्रादुरभवन्, प्रादुर्भवन्ति, प्रादुर्भविष्यन्ति च। अनेकास्तदीया व्याख्याः प्रस्तुताः। प्राचुर्येण पुराकाकालादद्यावधि कृतेऽपि बहुशो विचारे तद्गतं रहस्यं तत्त्वतः पूर्णतया समुन्मीलितं नाभूदिति परमात्मवत्तदीयं व्यापकत्वं सुतरामनुमातुं शक्यते। निगूढं रहस्यं हि कुतूहलजनकं भवति, तेन प्रवृत्तिः समुदेति, प्रवृत्त्या च फलनिष्पत्तिरिति मान्यः क्रमः।

सम्प्रति वैज्ञानिके युगे साहित्यातिरिक्तक्षेत्रान्तर्गतानां मानवानां कृते नास्ति रसो जिज्ञासाविषयीभूतः, तथापि तेषामुत्कण्ठाप्रयोजकस्त्वसौ वरीवर्त्येव। काव्यमधीत्य नाटकञ्चावलोक्य रसानुभूतौ मनागान्तर्यं न जायते। समेषां सा रसानुभूतिर्भवत्येव। अथ का सा रसानुभूतिः? कथं च निष्पद्यते? कोऽत्र हेतुः? कः क्रमः? इत्यादयोऽनेके प्रश्ना उद्भवन्ति। एकैकशो रसस्वरूपविवेचनपूर्वकं रसनिष्पत्तिप्रक्रिया मनोवैज्ञानिक-

१. साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥ (वक्रोक्तिजीवितम्—प्र० प०)

दृशा विचार्यते—कोऽयं रस इत्येषा जिज्ञासा काव्यशास्त्रेतिहासवत् प्राक्तनी विद्यते। भरतमुनिप्रणीते नाट्यशास्त्रे षष्ठाध्याये रसविषयकः प्रश्नः समभ्युदितः—"अत्राह—रस इति कः ? तत्रोत्तरितम्—"पदार्थ इत्युच्यते"। 'पदार्थः' इत्यस्य तात्पर्यं वस्तुविशेषे नास्ति, अपि तु काव्यार्थ एव संश्लिष्यति। इममेवार्थमभिनवगुप्तपादाचार्यः परिपुष्णाति। रसेन काव्यार्थभावनाया जायमानत्वाद् रसः काव्यार्थ एवेति मन्तव्यम्। स एव पदार्थ-व्यपदेशभाग् भवति। यथोक्तम्—"काव्यार्थान् भावयन्ति इति तत्काव्यार्थो रसः", तस्माद् आस्वाद्यत्वात् पदार्थः काव्यार्थो वा रसः। अत्र नाट्यशास्त्रोक्तिरेव प्रमाणम्। यतश्च काव्यात् काव्यार्थस्यैवास्वादो जायते। काव्यार्थ एवास्वाद्यः, ततः स एव रसः[1]। भावत्वेन भावाश्चापि आङ्गिकवाचिकमानसिककृताभ्यासाभिनयद्वारा काव्यार्थभावनां जनयन्तोऽन्वर्थतां प्रतिपद्यते[2]।

आस्वादो रस आस्वाद्यो वेति जिज्ञासायां निष्कर्षतया रस आस्वाद एवेति स्वीकर्त्तव्यम्[3]। यतो हि रसस्यास्वाद्यत्वे निष्ठ्यनिष्ठत्वमनुभवविरुद्धं प्रसज्यते। सर्वानुभवसिद्धतया तस्य विषयित्वेन व्यक्तिनिष्ठत्वं समुचितम्। अत्र नास्ति कस्यापि विसंवादः। वस्तुतो रसः कस्यापि बाह्यविषयस्य गुणानां प्रत्यक्षात्मकं ज्ञानं नाङ्गीक्रियते, तथात्वे सत्येव तस्य विषयनिष्ठत्वं युज्यते। आपामरतिर्यगादिजीवानामिन्द्रियार्थसन्निकर्षजन्यज्ञानानुभवविषयोभूतो रसो नास्तीति कृत्वा तस्य विषयनिष्ठत्वं सर्वथा परास्तम्, केवलं केषाञ्चित् सहृदयानां तदास्वादो जायते। किञ्च विषयनिष्ठोऽनुभवो देशकालपात्रव्यक्तिभेदात् सामान्यतया विभिन्नप्रकारकः, विशेषतश्च सुखदुःखमोहात्मको भवति। रसात्मकोऽनुभवश्च केवल आनन्दात्मको विशिष्य पुण्यशालिनामेव सञ्जायते—"पुण्यवन्तः प्रमिण्वन्ति योगिवद् रससन्ततिम्' इत्युक्तेः। यतः प्राक्तनेदानीन्तनोभयविधवासनावासितान्तःकरणानामेव सहृदयानां रसात्मकोऽनुभवः सम्भवति। उभयोरेकतरस्याभावे तदास्वादो नोपजायते। तस्मात्सहृदयानां हृदयेषु वासनात्मतया स्थितानां मनोभावानां स्थाय्यादिपदवाच्यानामनुभवात्मको बोधो रस इत्युक्तं भवति।

ननु नाट्यशास्त्रे रस आस्वाद्य इत्युक्तम् 'रस आस्वाद्यते' इति कर्मवाच्य-प्रयोगाद् आस्वादविषयत्वेन रसस्यास्वाद्यत्वं सिध्यति, तर्हि आस्वादो रस इति वचनं

१. आस्वादनात्मानुभवो रसः काव्यार्थं उच्यते ॥ (अभिनवभारती, पृ०—२७७)
२. वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। (ना० शा० अ० ७)
३. रस इतिः कः पदार्थ उच्यते, आस्वाद्यत्वात्। (ना० शा० अ० ६)

परस्परविरुद्धं प्रतिभातीति चेत्, मैवं वाच्यम्, यतो हि सहृदयानां सामाजिकानां मनोगताः स्थायिरूपेण विद्यमाना रत्यादिभावा [1]वासनात्मकानुभवविषयीभूता रसत्वमभ्युपगच्छन्ति, तस्माद् 'रस आस्वाद्यते' इत्याद्युक्तिरौपचारिकप्रयोग एव मन्तव्यः। उक्तञ्च साहित्यदर्पणकृता श्रीविश्वनाथेन—'रस आस्वाद्यते' इति प्रयोगस्तु ओदनं पचतीतिवद् औपचारिक एव। अतश्च रसो वा रसात्मकोऽनुभवो वा आस्वाद एव, न त्वास्वाद्यः।

भरतमुनिप्रणीतं नाट्यशास्त्रं हि रसविषयकः शास्त्रीयविवेचनायाः प्रथमो ग्रन्थ उपलभ्यते। तत्र तत्र रसानुभवः साक्षात्कारात्मकः स्वीकृतः। इन्द्रियसन्निकर्षजन्यज्ञानानुभवस्तदर्थं नोपयुज्यते। रत्यादयो भावा मनोगताः स्थायित्वेन तिष्ठन्ति, तेषां मानसिकः समुद्भवः 'उद्रेकः' इत्युच्यते। तेन अनुभवविषयतामुपगच्छन्ति। तेषामुद्रेको द्विविधः सम्भवति—एकतो दैनन्दिनव्यवहारे प्रत्यक्षमुपस्थितेषु विषयेषु अपरतश्च काव्यवर्णने नाटकाभिनये वा तेषु साक्षात्कृतेषु सत्सु। काव्ये नाट्ये वा यदा तदुद्भेदो भवषि, तदा ते साक्षान्मनसैवानुभवविषया भवन्ति। जाते हि तस्मिन् मानसिके प्रत्यक्षे सहृदयानां सामाजिकानां समुद्भिन्ना रत्यादिस्थायिनो भावा विगलितवेद्यान्तरस्पर्शसंश्लिष्टेन चेतसाऽऽस्वादनात्मकानुभवविषयतां प्रतिपद्यमाना रसत्वमभ्युपगच्छन्ति। अयमेव रसानुभवप्रकारः साहित्यशास्त्रपरम्परायां समादृतः।

निष्कर्षतयेदं प्रतीयते यत् सहृदयजनमनोभावानुभव एव रसः। काव्यवर्णनैर्नाट्यदृश्यैश्च तेषां भावानामुद्रेको जायते। तदुद्रेकवशात्तेऽनुभवविषयतां भजन्ते। अयमेवानुभवो मनसाऽऽस्वादनमित्युच्यते[2]। अत एव रसो नास्ति विषयनिष्ठोऽपि तु विषयिनिष्ठ एव, तस्यास्वाद्यविषयकधर्माभावेन आस्वादनकर्तुः सहृदयसामाजिकस्य विषयिणो धर्मस्वरूपत्वात्[3]। स्वगतधर्मानुभवस्य च व्यक्तिनिष्ठतैवोचिता; न तु विषय-

---

१. यथोक्तम् धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यानुभवो भवेत्।

निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः॥

२. भावाभिनयसंबद्धान् स्थायिभावांस्तथा बुधाः।

आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः॥ (ना० शा० अ०, ६।३३)

३. रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।

निष्ठतोपपद्यते तस्येति। अत एव रसोऽयं रसास्वादनक्षमसहृदयानुभवप्रमाणकः, आत्मानन्दसमुद्भवः साक्षादास्वाद इत्युक्तः[1]।

धनञ्जयोक्त्या हि बाला यथा मृण्मयैर्हस्तिपश्वादिभिः क्रीडन्तोऽवास्तविकानपि तान् वास्तविकानिति मत्वा सोत्साहमानन्दमनुभवन्ति, तथैव काव्यनाट्यवर्णनागतैः पात्रैरवास्तविकैरपि समुद्भाविता भावा सामाजिकानामनुभवविषयतां गता आह्लादं जनयन्ति।

**क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः।**
**स्वोत्साहः स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः ॥** (दशरूपके, अ० ४।४१)

उत्साहादिभावानामनुभव एवात्र 'स्वदते' इति क्रियापदेनोक्तः। अनुभवोऽयमास्वादनात्मक एव। उक्तञ्च भट्टनायकेन—'काव्येन रसा भाव्यन्ते'। एतदुक्तेर्विश्लेषणं कुर्वताऽऽचार्याभिनवगुप्तपादेन प्रत्यपादि—'यत् काव्येन रसा भाव्यन्ते—इत्युच्यते, तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भावनं तदभ्युपगम्यत एव'।

काव्यार्थस्यास्वादनात्मकोऽनुभवो रस इत्युक्तेस्तात्पर्यं यत् काव्यार्थं एव व्यञ्जनाव्यापारविषयीभूतो व्यज्यमान आस्वादनात्मकानुभवः सम्पद्यमानो रसत्वेन पर्यवस्यति[2]। एवं हि रसास्वादो नाम बौद्धिकप्रक्रियाजन्यज्ञानस्य तथा मानसिकप्रक्रियाजन्यानुभवस्य[3] च समवायात्मको बोद्धव्यः। अत एव स एव काव्याधिकारी यो हि विमलप्रतिभोच्छलत्स्वच्छविशदस्वान्तः सहृदयः। काव्यात्मकवाक्यश्रवणानन्तरमेव वाक्यार्थबोधसमकालं समुद्भूतेन मानसिकबोधेन काव्यविषयाः साक्षात्क्रियमाणा स्वानुभवप्रत्यक्षीकारक्रियामुपगच्छन्ति। एष एव सहृदयसंवादः स्वबुद्धिगतविषयानुभवः", "काव्यार्थसम्भेदादात्मानन्दसमुद्भवः स्वादः" एव प्रोच्यते, तद्भाजश्च सहृदया भवन्तीति।

उपर्युक्तेन विवेचनेनेदं स्पष्टं प्रतीयते यद् रसानुभूतिः मानसप्रत्यक्षविषयात्मिकेति। अपि च मनोविकाराणां तत्तदवस्थायाः स्वात्मानुभवो वेति वक्तुं युज्यते। कश्चिदपि बाह्यो विषय इन्द्रियसन्निकर्षमुपगतो मनो नूनमाकर्षति। तत्परिणामतश्च

---

१. स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ॥ (अभिनवभारती, पृ० २७७)
२. 'आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते'॥
३. अनुभवेन च तद्विषय इति मन्तव्यम् ॥ (अ० भा०)

तत्तन्मनोविकाराणामनुभूतिः सञ्जायते[१] । एत एव मनोविकारा योगशास्त्रे चित्तवृत्तिरूपेण निरूपिताः सन्ति । यतश्च तासां विकृतिरूपाणां चित्तवृत्तीनां निरोध एव योगः[२] । योगशास्त्रे च विविधानां वृत्तीनां सूक्ष्मातिसूक्ष्ममनुसन्धानं सन्दृश्यते रसनिष्पत्तिप्रकारे योगे चोभयत्र चित्ते नामान्तःकरणात्मिकाबुद्धिरित्येव[३] मन्यते, न तु चितिशक्तिः स्वात्मा वेति । यतो हि योगे वा काव्ये वा याऽनुभूतिः सा निश्चयात्मिकैव भवति । इयमेवानुभूतिरध्यवसाय इत्युच्यते । अर्थाद् बुद्धेश्चित्तस्य वा निश्चयात्मिका वृत्तिरेवाध्यवसायः । ज्ञानञ्च तद्गतो धर्मः, सैव ज्ञानात्मिका प्रक्रिया, तत्रैव परिणामो विकारो वा सम्भवति, न तु चितिशक्तौ । अभिनवगुप्तपादाचार्येण[४] रसचर्वणाऽपि कश्चन प्रत्ययप्रकारोऽभ्युपगतः । यत्र चित्ते रसानुभूतिर्जायते, तज्जडात्मकं नास्ति, तत्रास्ति खलु स्वपरसंवेदनक्षमत्वं नाम । अतो रसानुभूतिर्वा रसचर्वणा वा ज्ञानरूपैव भवति । अत एवासौ 'आनन्दमयसंविद्' इत्युच्यते । आनन्दरूपतयैव तज्ज्ञानग्रहणं सम्पद्यते, न तु स्वपरभेदरूपतया । ततो योगस्य रसानुभूतेराश्रयभूतचित्तवृत्तीनां तुलनात्मकमनुसन्धानं च पर्याप्तमुपयुज्यते । अपि चोद्देश्यभूतफलप्राप्तिदृष्ट्यापि योगः काव्यं च कामपि तुल्यां कोटिमाटीकते । यतश्चोभयत्र दुःखस्यापनोदनमेव प्रधानप्रयोजनं भवति । भेदस्त्वयमेव यद्धि योगेऽनागतस्य दुःखस्य प्रशमनम्, काव्ये तु वर्तमानस्य तस्य अपनोदनम् इति[५] । योगस्य प्रवृत्तेर्लक्ष्यम् "हेयं दुःखमनागतम्" इति । यतोऽतीतस्यातिवादितत्त्वाद् वर्तमानस्य च भोगारूढत्वादुभयमुपेक्ष्यम् । आगामिनो दुःखस्यैव प्रशमनाय

---

१. येषां काव्यानुशीलनवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभावयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः । (ध्वन्यालोकेऽभिनवगुप्तस्य प्रथमकारिकाप्रयुक्तसहृदयपदव्याख्या)।

२. योगश्चित्तवृत्तिनिरोधः ( योगदर्शनम्—१।२ ) ।

३. चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति । न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति । ( वाचस्पतिमिश्रकृततत्त्ववैशारदी टीका, यो० सू०, १-१ ) ।

४. रसना च बोधरूपैव, किन्तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणैव, उपायानां विभावादीनां लौकिकवैलक्षण्यात् । तेन विभावादिसंयोगाद् रसना यतो निष्पद्यते, ततस्तथाविधरसनागोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यं सूत्रस्य-(अभिनवभा० दी० ना० शा० पृ० २८५) ।

५. दुःखमतीतमुपसंभोगेनातिपिहितं न हेयपक्षे वर्तते । वर्तमानं च स्वक्षणे भोगारूढभिति । (यो० सू० भा० २।१६) ।

योगिनां प्रवृत्तिः सञ्जायते, तदेवोद्देश्यं तेषाम् । तद्विपरीतं तु काव्यस्य प्रयोजनं सद्यः-परनिर्वृतिरेव[१] । अनेन वर्तमानस्य दुःखस्यापनोदनं जायते । एवं हि योगस्य दुःखापनोदनं स्थायि, काव्यस्य च तदस्थायीति; परं दुःखापनोदनं द्वयोः समानमेव[२] ।

नानाविधभवव्याधिनिपीडितानां कृते काव्यं हि क्षणं विश्रान्तिसुखप्रदं प्रमोदास्पदं चास्तीति ।

चित्तवृत्तीनां योगदर्शने पञ्चभूमयो निरूपिताः—क्षिप्तम्, मूढम्, विक्षिप्तम्, एकाग्रम्, निरुद्धञ्च । तत्र क्रमेण तिस्रोऽवस्था दैनन्दिने जीवने यथावसरमनुभूयन्ते । जाग्रदवस्थायां चित्तं क्षिप्तं तिष्ठति । सुषुप्तौ गाढनिद्रावस्थायां च मूढं जायते । तुर्यावस्थायां च सन्निरुद्धं निवसति । सैषाऽवस्थाऽसम्प्रज्ञातसमाधौ समुद्भवति । एकाग्रावस्था च सम्प्रज्ञातसमाधिदशाया वृत्तिरुच्यते । सेयं दशा जाग्रदवस्थाया एव विशिष्टा स्थितिरस्ति । कस्मिंश्चिद् वृत्तिविशेषे तन्मयीभवनं साधकस्य कमपि बिन्दुमुद्दिश्य चित्तस्यैकाग्रीकरणं वा तत्सम्प्रज्ञातावस्थोच्यते[3] । सम्प्रज्ञातासम्प्रज्ञातावस्थयोः समाध्योरयमेव भेदः । तात्पर्यतश्चित्तस्याशेषवृत्तिविरोधेऽसम्प्रज्ञातः, तथा सत्त्ववृत्तिमात्रसत्तात्मको हि सम्प्रज्ञातः समाधिः समुपजायते । सम्प्रज्ञातोऽयं[४] समाधिर्वितर्कं विचारमानन्दमस्मिताञ्चानुगत्य तिष्ठति । अयमाशयः—स्थूले वस्तुनि चित्तैकाग्रतायां वितर्कानुगतः, विषयविशेषे तदेकाग्रतायां विचारानुगत आह्लादे तदेकाग्रतायामानन्दानुगतः, तथा बुद्धावात्मना सहैकात्मतासंविदवस्थायां चास्मितानुगतः सम्प्रज्ञातसमाधिः प्रोच्यते । सम्प्रज्ञातसमाधेरेवेदं प्रकारचतुष्टयम्[५] । काव्यजन्यरसानुभूतिरपि चित्तस्यास्यामेवैकाग्रतावस्थायां समुद्भूता सम्प्रज्ञातसमाधेर्दशाविशेषरूपा पर्यवतिष्ठते । यतो ह्यत्र चित्तस्यैकाग्रताया विषयो ह्लादविशेषो भवति, ततोऽयमानन्दानुगतसम्प्रज्ञातकोटिमवगाहते । आनन्दानुगतसम्प्रज्ञातसमाधिना काव्यजन्यरसस्याह्लादात्मकानुभूतौ जायमानां चित्तस्यैकाग्रतां विषयीकृत्य प्रतितिष्ठति । अस्मितानुगतश्चासौ ततोऽपि सूक्ष्मतरं ज्ञानं

---

१. सकलप्रयोजनमौलिभूतं समनन्तरमेव । [ का० प्र० प्र० ] ।

२. दुःखार्तानां श्रमार्तानां शोकार्त्तानां तपस्विनाम् ।
विश्रान्तिजननं काले नाटचमेतद् भविष्यति ।। [ ना० शा० १।११४ ] ।

३. सम्यक्प्रकर्षेण ज्ञायते यस्मिन्नसौ सम्प्रज्ञातः, तद्भिन्नः असम्प्रज्ञातः ।

४. रजस्तमोमयी किल प्रमाणवृत्तिः सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा, असम्प्रज्ञाते तु सर्वासामेव निरोध इति । [ वा० मि० यो० सू० १–१, व्यासभाष्यटी० ] ।

५ वितर्कविचारानन्दास्मितारूपानुगतात्सम्प्रज्ञातः । [ यो० सू० १।१७ ] ।

वैराग्यं चाधिकृत्य "अहं ब्रह्मास्मि" इति सत्यानुभूतौ स्वात्मना सह ज्ञानैकात्मताबोधे चारितार्थ्यं व्रजति। वितर्कविचारानन्दास्मिताबोधोदयादेवायं समाधिः सम्प्रज्ञातनाम्ना व्यपदिश्यते।

आनन्दानुगतसम्प्रज्ञातसमाधिरेव चित्तस्य रसावस्थेति भणितिर्नात्युक्तिं भजति। योगभाष्ये सम्प्रज्ञातसमाध्यवस्थाया यो हि वर्णनप्रकारो दृश्यते, तस्य काव्यरसचर्वणावस्थानिरूपणे पर्याप्तं साम्यं परिलक्ष्यते। तत्रोक्तम्—सम्प्रज्ञातो हि नामैकाग्रचित्तसद्भूतमर्थं प्रकाशयन् क्लेशान् विनाशयन् कर्मबन्धनं शिथिलयंश्चेतो निरुद्धदशाभिमुखीकरोति[1]।

अत्र वाचस्पतिमिश्रमतानुसारं 'भूत' पदेन कस्मिन्नपि वस्तुनि समारोपितस्यार्थस्य निवृत्तिरित्युच्यते[2]। अन्यथात्वे तु निद्रावृत्तिरपि स्वाधारभूतचित्तस्यैकान्ततमो भाव एकाग्रतामुपगच्छति। अतोऽत्र सत्पदं शोभनार्थंकतयोपपद्यते। अत्र सत्त्वगुणस्यैव नितान्तमाविर्भावो जायते। तमसः समुद्रेकस्तु नूनमशोभनतया क्लेशहेतुरुच्यते। तादृशस्य सत्त्वभावस्य प्रद्योतनं तत्त्वज्ञानेनानुभवेन वा जायते। उभयतश्च तज्ज्ञानमविद्याया उच्छेदं परोक्षतया करोति, न तु साक्षाद्रूपतया। अनेन ज्ञायते यच्चैतत् सत्त्वरूपत्वमस्य सम्प्रज्ञातावस्थात्मनो विद्यते। नाट्यशास्त्रस्य विश्रुतटीकाकृता भट्टनायकेन चर्वणानिष्पत्त्या भोजकत्वव्यापारप्रक्रियानिरूपणप्रसङ्गे सरणिरेषैव समाश्रिता। अत्रेदमाकूतम्—विभावादिसाधारणीकरणानन्तरं सहृदयसामाजिकानामन्तःकरणे रजस्तमसी अभिभूय सत्वगुणस्योद्रेको भवति, तत्र बुद्धिः प्रकाशते। तदनुभवो ह्यानन्दात्मको जायते। सैव बुद्धिरानन्दमयसंविदित्युच्यते। तत्रैव चित्तस्यैकमात्रविश्रान्तेः रत्यादिभावेषु कस्यचिदेकतरस्य बोधाद् अन्यतरस्वादस्य चर्वणात्मकदशाविशेषस्य परिशोलने भागत्रयं कर्तुं शक्यते—सत्त्वोद्रेकः प्रकाशानन्दमयसंविद्, विश्रान्तिसतत्त्वमिति[3]।

पूर्वोक्ते सम्प्रज्ञातसमाधौ चितस्यैकाग्रताऽपि विभागत्रयेण विभक्ता यथा—सद्भूतार्थप्रद्योतनम् बन्धक्लेशक्षयो विरोधोन्मुखीभावश्च। उभयत्र सर्वथा साम्यमाकल-

---

१. यस्त्वेकाग्रे चित्ते सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते। [यो० सू० १-१ भाष्यम्]।

२. भूतमिति समारोपितमर्थं निवर्तयति। निद्रावृत्तिरपि स्वावलम्बे तमसि भूते एकाग्रा इत्यत उक्तम्। सदिति शोभनं नितान्ताविर्भूतसत्त्वं, तमस्समुद्रेकस्तु अशोभनस्तस्य क्लेशहेतुत्वादिति। [ वाचस्पतिः, ७३।१–४ )।

३. सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते [ भट्टनायकः, का० प्र० च० उ० ]।

नीयम्। भट्टनायकमताभिमतरसानुभूतिप्रक्रियायां सत्त्वोद्रेक एव सद्भूतार्थप्रद्योतनम्। प्रकाशानन्दसंविदेव क्लेशक्षयः। विश्रान्तिसतत्त्वमिति निरोधोन्मुखीभावः।

अपि च सम्प्रज्ञातसमाधौ यद्धि कर्मबन्धश्लथत्वमुक्तम्, तदत्र रसानुभूतौ अभिनवगुप्तपादाचार्योपपादितं विभावादीनां साधारणीकरणमेव प्रतीयते[1]। कर्मबन्धनश्लथत्वं यद्यपि योगशास्त्रे पूर्वार्जितकर्मसंस्कारशैथिल्यमभिप्रेतम्। परमत्र साधारणीकरणदशायां स्वावस्थापरस्य वा हिताहितप्रेक्षणेन कृतकर्मद्वारा परस्पररागद्वेषवशात् शत्रुमित्रभावरूपबन्धनश्लथत्वमवगन्तव्यम्। तादृशस्य बन्धनस्यैवात्र रसानुभूतिवेलायां परिहारान्मनसि निर्विघ्नं विगलितवेद्यान्तरत्वमुदेति। यद्यपि नैते भावा सर्वथा समाप्तिमुपयान्ति तथापि तत्समकालं शैथिल्यमनुव्रजन्त्येव। एवमिदं सम्यक् पर्यवगन्तुं शक्यते यत्काव्यजन्यरसानुभूतिप्रक्रियाधारो हि चित्तस्यानन्दानुगतसम्प्रज्ञातसमाधिरवसीयते। सेयमवस्था तदेकाग्रतायां सम्पद्यते। तत्रैव भेदानुकूलं तदीयं तारतम्यमवसातुं शक्यम्। यत्र च वितर्कानुगतं किमपि स्थूलं वस्तुरूपमाधारीकृत्य चित्तस्यैकाग्रता जायते, आहोस्विद् विचारानुगतं कमपि विषयमाधृत्य सोपपद्यते, तत्रानन्दानुगतं वस्तु वा विषयं वोपेक्ष्य ततोऽपि सूक्ष्मतरां रागात्मिकामनुभूतिमाश्रित्य तदुपपादनं तदुभयसाधारण्येन सम्पादयितुं शक्यते। आचार्याभिनवगुप्तेनापीदमेव संलक्ष्य सा किल रसास्वाददशा चिद्विशिष्टरत्याद्यनुभूतिरभिहिता। पण्डितराजजगन्नाथेन च सैव रत्याद्यवच्छिन्ना चिदुक्ता। रत्यादयो न वस्तुरूपाः, नापि बाह्यविषयाणां संस्कारसंवलिता भावरूपास्ते सन्ति, यत्राह्लादजनिका चित्तैकाग्रता प्रतितिष्ठति। प्रक्रियायामस्यामभिनवगुप्तमतेन स्वात्मपरामर्शः, पण्डितराजगन्नाथमतेन च चिदावरणभङ्गश्च सञ्जायते। अत एवेयं रसदशाऽऽनन्दानुगतसम्प्रज्ञातसमाधिनाम्ना व्यपदेष्टुं शक्या। अनेनैव हेतुना नाट्यशास्त्रोक्तादास्वाद्यत्वादित्युक्त्या रस आस्वादविषयत्वेन विषयनिष्ठ एवोपयुज्यते—इति मन्वाना तत्त्वानभिज्ञतां प्रदर्शयन्ति, तस्य विषयनिष्ठत्वे सति विचारात्मकतया पर्यवसन्ने तस्मिन्नानन्दात्मकत्वं परिहीयते। एतद्विपरीतं तु तस्यानुभूतेरानन्दात्मकत्वेन सहृदयजनमनोजायमानत्वात् चेतनाधर्मरूपत्वाच्च विषयिनिष्ठत्वमेव संगच्छते। अत आस्वदनात्मकानुभूतिरास्वादविषयाभावादानन्दानुगतसम्प्रज्ञातसमाधिकोटिमाटीकमाना सती सम्प्रतिष्ठते।

१. "ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः" (का० प्र० च० पृ० ९२)।

अथ चित्तस्यैकाग्रतावस्थां निरुद्धावस्थां वा सम्प्राप्तुं योगशास्त्रे तत्प्रसादन-विधानमुपदिष्टम् । प्रसादितं चित्तमेव सत्त्वशीलं सदेकाग्रं पश्चान्निरुद्धं भवितुमर्हति । तच्च प्रसादनं रजस्तमोऽभिभवपूर्वकं सम्पद्यते[1] । यतस्तदनन्तरमेव सत्त्वोद्रेकः संजायते । एतदर्थं योगशास्त्रे जागतिका विषया चतुर्धा विभज्य भावनाविशेषणपरि-शीलिताः सन्ति[2] । जगदिदं हि सुखदुःखपुण्यपापसमवायात्मकं विद्यते । अत्र कश्चिद् विषयः सुखात्मकः, कश्चिद् दुःखात्मकः, कश्चित् पुण्यप्रदः, कश्चित् पापमयश्चास्ति । इमानेव चतुर्धा विभक्तान् विषयान् परिशील्य चतुर्धारूपया भावनया विहितया सत्या चित्तं प्रसादितं सत्यशीलनिष्ठं च भवति । तत्र दुःखिनं प्रति करुणाभावना, पापिनं प्रति चोपेक्षाभावना विहिता । एतादृशभावनाविधानेन शुक्लधर्मोत्पत्त्या चित्तप्रसादन-मेकाग्रत्वं च सहजं सम्प्राप्यते । इयमेव चित्तस्य स्थितिशीलता प्रोक्ता । अनया रसानु-भूतिसिद्धान्तः समीकृतो वर्तते[3] ।

भरतोक्तरसानुभूतिप्रक्रियापरिकलनं हि योगदर्शनप्रकरणमिदं नूनमनुसरति । पूर्वोक्तानुसारेण बाह्यविषयैरिन्द्रियसन्निकर्षे जाते नानाप्रतिक्रियापरीतं चित्तमभि-द्रवति । तादृशं चित्तं सदेवैकविधं नोपज्ञायते, तत्रापि विभिन्नविषयानुगतं वैविध्यं भवति । तद्वर्गीकरणं बाह्यालम्बनमुद्दिश्य सम्भवति । चतुर्धा विभक्तेषु बाह्यविषयेषु सुखदुःखपुण्यपापास्पदत्वं भेदमूलकत्वेन प्रोक्तम् । मैत्री, करुणा, मुदिता, उपेक्षा चेति भावनाश्चित्तप्रतिकृतिप्रकारभूताः प्रतिपादिताः । अनेन विवेचनात्मकविचारेण बाह्य-विषयाविष्टचित्तविकाराणां प्रकारचतुष्टयं परिकल्पनीयं भवति— विकासः, विस्तरः; क्षोभः, विक्षेपश्च । एते मनोविकारा एवोच्यन्ते । एषामेकैकशो विवेचनं रसानुभूति-प्रक्रियोद्देश्यकं प्रस्तूयते—

---

१. 'प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टम् ऐश्वर्यविषयप्रियं भवति । तदेव तमसाऽनुविद्धम् अधर्माज्ञानवैराग्यानैश्वर्योपगं भवति । तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धरजं मात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति, तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यथाख्यातिपात्रं धर्ममयध्यानोपगं भवति, तत् परं प्रसंख्यान-मित्याचक्षते ध्यायिनः (यो० सू० १-२ भाष्यम्) ।

२. 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (पा० यो० सू० १-३३) ।

३. यत्किञ्चिल्लोके शुचिमेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते । (ना० शा० व० अ० ३०१-२) ।

विकासः—अयं चित्तविकृतेरवस्थाविशेषः। चित्तप्रसादनेऽयं पुण्यात्मकविषयमधिकृत्येन्द्रियसन्निकर्षात्स्वयमेवोपजायते। विकासमापद्यमाने चेतसि सत्त्वगुणः समुदेति। अस्यानुभूतौ शृङ्गाररसो हास्यरसो वाऽनुभवविषयतां प्रतिपद्यते। नाट्यशास्त्रेऽपि शुचिमेध्यमुज्ज्वलं सर्वं शृङ्गारेणोपमीक्रियते। अनेन सुस्पष्टं प्रतीयते यद्धि शृङ्गारस्यानुभूतिरूपप्रसादनभावनास्पदत्वं विषयाणां शुचिमेध्योज्ज्वलपुण्यशालित्वं च तदर्थं कियदुपयुज्यते। कामुकत्वप्रदर्शनमात्रं न शृङ्गारोपजीवकं भवति, प्रत्युत सर्वविधशुचितोपजीवकत्वमेव तस्य शास्त्रसम्मतम्।

विस्तरः—चित्तविस्तरो नाम तत्प्रतिक्रियानुरूपमुच्यते। बाह्यविषयैरिन्द्रियसन्निकर्षे सति चित्तस्य सुखात्मको विस्तरो जायते। एष विस्तरोऽपि तद्विकारस्वरूपनिरूपणात्मको भवति। अत्रापि सत्त्वगुणसमुदयो विस्तरेण सर्वाण्यङ्गानि व्याप्नोति' तत्परिणामतश्च प्रत्यङ्गं क्रियाशीलत्वमभिजायते। तदनुभवश्च मैत्रीभावनोदयादुद्भवति। वीररसेऽद्भुतरसे चैतदनुभूतिः सुतरां सञ्जायते। वीररसस्थायिनो ह्युत्साहस्य सर्वत्र वपुषि सञ्चारेणाभिव्यापनं तद्विस्तृतिद्योतकं मन्यते। वस्तुतस्तु मनसि मैत्रीभावनोद्भावनमेव चित्तविस्तरणलक्षणं भवति। नाट्यशास्त्रे वीररस उत्तमप्रकृतिकोऽसंमोहाध्यवसायनयविनयपराक्रमादिक्रियोद्भवः प्रतिपादितः[1]। एतदपेक्षया किञ्चिदप्राधान्येनाद्भुतो रसोऽपि चित्तविस्तरणक्रियोद्भूतः सन् विस्मयस्थाय्यात्मकश्चित्तमभिव्याप्नोति।

क्षोभः—दुःखेन चित्तक्षोभो जन्यते। दुःखास्पदवस्तुविषयसन्निकर्षवशाच्चेतसि तत्प्रतिक्रियात्मकः क्षोभ उत्पद्यते। तत्परिणामतश्च कारुण्यमुद्भवति। सत्यामस्यामवस्थायां क्षोभप्राबल्ये सत्त्वरजस्तमोगुणानां मिथः सङ्घर्षः प्रोद्भवति। तद्धेतुकं क्रियान्तरं रोदनविलापप्रलापमूर्च्छादिकं समुत्पद्यते। तच्च चित्तस्य क्षोभानन्तरं शान्तस्वरूपमुपेयुषः स्वाभाविकी क्रियोच्यते। येन चित्तं स्वास्थ्यमुपैति। प्राधान्येन रौद्ररसेऽप्राधान्येन च करुणे क्षुब्धे चित्ते कारुण्यमनुभूयते[2]।

विक्षेपः—उपेक्षाभावनां चित्तस्य विक्षिप्तावस्था जनयति। जुगुप्सारूपेण भयरूपेण चास्य प्रतिक्रिया भवति। तत्परिणामतश्च बीभत्सो भयानकश्च रसोऽनुभूयते।

---

१. अथ वीरो नाम उत्तमप्रकृतिरुत्साहात्मकः स चासंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते ( ना० शा० भा० भा०-१ पृ० ३२४ )।

२. शोके क्षोभे च हृदयं प्रलापैरेव धार्यते ॥ ( उत्तररामच० ३।२९ )।

उपेक्षाभावनोद्भूतश्चित्तविक्षेपश्च पापमयबाह्यविषयसन्निकर्षेण तत्प्रतिक्रियास्वरूप भाख्यायते। रसगतं तारतम्यं च विषयानुसारमवगन्तुं शक्यम्।

अनया पर्यालोचनया साधयितुमिदं शक्यते यद् विकासविस्तरक्षोभविक्षेपा एव चित्तस्य मूलभूता विकाराः प्रोक्ताः। तदनुभवश्च मुदितामैत्रीकरुणोपेक्षात्मकभावना-व्यापारेण सञ्जायते। अत एव नाट्यशास्त्रे शृङ्गारवीरबीभत्सरौद्ररसाश्चत्वार एव प्राधान्येन परिकलिताः[1] सन्ति। हास्यकरुणाद्भुतभयानकाश्च तेभ्य एवोद्भूताः परिगण्यन्ते। इत्थं योगशास्त्रप्रक्रियानुसारेण साहित्यशास्त्रे रसबोधविमर्शः सम्पद्यत इति शम्।

---

१. तेषामुत्पत्तिहेतवश्चत्वारो रसाः। तद्यथा–शृङ्गारो रौद्रो वीरो बीभत्स इति। अत्र –

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः॥ [ ना० शा० ६।३९ ]।

# मोक्षतत्साधनविमर्शः

अथ कोऽयं मोक्षपदार्थः ? कश्च तदवाप्तेः सुगमः श्रौतोद्दिष्टः पन्थाः ? किञ्च तदर्थमन्वर्थसाधनम् ? इत्येषा शिष्टजिज्ञासानिहिता मनीषा विशेषात्मतत्त्वालोचन-मुख्यातशेमुषीकस्य निखिलवेदान्तवाक्यनिगूढार्थज्ञानप्रतिपादनप्रथितप्रज्ञाविवेकस्य विश्वविश्रुतदार्शनिकशीर्षाभिषिक्तगरिमोद्गीतगुरुतरकीर्तिकस्य; अद्वैतसिद्धान्तप्रतिष्ठापन-परमाचार्यवर्यस्य श्रीमदाचार्यशङ्करभगवत्पादस्य मताभिमता तदीयभाष्यग्रन्थोपनिबद्धा तत्र तत्र तद्व्याख्याग्रन्थेषूपनिषदां प्रतिपाद्यतत्त्वालोचनविवेचनेन तद्भावनोन्नोतप्रणीत-स्तोत्रपद्यकदम्बकेषु चाप्येकान्तेन मतान्तरनिरसनोपात्तोदारवैशिष्ट्यप्रकर्षेण पर्यवति-ष्ठते। शिष्याः खलु विदिताखिलवेद्यविद्याविद्योतितान्तःकरणा मनीषिणः, तेषां तत्कृता वा जिज्ञासा मोक्षविषया। मोक्षमुद्दिश्य तज्ज्ञानेच्छा तदवाप्त्युन्मुखीभावः तदुपायसमा-लम्बनोद्योगो वा तादृशजिज्ञासायास्तात्पर्यार्थः। मोक्षश्च मुक्तिमायानिवृत्त्यात्यन्तिक-सुखावाप्त्यनासक्त्यादिशब्दव्यपदिष्टः समेषां मुमुक्षूणामुद्दिष्टः शास्त्रोपदिष्टः प्रतिष्ठते। तत्रानेकेषां दार्शनिकविदुषां दर्शनान्तरदृशा मतान्तराणि स्वस्वोन्मिषितमनीषया निरूपितानि सन्दृश्यन्ते। तत्र समग्रमतान्तराग्रेसरीकृता समन्वयदिशा ब्रह्माद्वैततत्त्वा-धिगमनोद्भासितात्मप्रकाशा श्रीमच्छङ्करभगवत्पादस्य मनीषैव सविशेषप्रकर्षमादधा-तीति तदभिमतमोक्षतत्साधनस्वरूपं निरूपयितुमिदमुच्यते—

> **आत्यन्तिकया दुःखान्निवृत्त्याऽऽत्यन्तिकं सुखम्।**
> **मोक्ष इत्युच्यते यस्मात्परं किञ्चिन्न विद्यते॥ १॥**

अतिक्रान्तोऽन्तश्चरमोऽवधिरत्यन्तस्तदनुबन्ध्यात्यन्तिकमतिशयितलौकिकावसान-संस्थानमस्य भावस्तत्तया दुःखात्प्रतिकूलवेद्यभावादनभीष्टक्लेशाज्जगत्प्रहाणजनितनिर्वे-दादनात्मभूतवस्तुस्वभावाच्च, निवृत्तिर्निर्वर्तनमुन्मोचनमुद्धृतिश्चानया निवृत्त्या जग-न्निःसारतयोपक्षीणतयासक्त्या यदात्यन्तिकं निरतिशयं निरवद्यमन्तहीनञ्च यत् सुखम-नुकूलवेद्यानन्दात्मकमात्मावस्थानरूपं ब्रह्मास्वादसविधवर्ति परमात्म्यैक्यदर्शि दर्शितं तत्र तत्रोपनिषद्वेदान्तवाक्येषु तदेव 'मोक्ष'-इत्युच्यते प्रतिपाद्यते निरूप्यते वा श्रीमच्छ-ङ्करभगवत्पादेन स्वीयभाष्यव्याख्यानग्रन्थोदिताभिमतश्रौतसिद्धान्तानुसारमित्याशयः

पर्यवसेयः। यस्मादुक्तलक्षणलक्षितात् सुखात्परमन्यदधिकमभिलषणीयं किञ्चित्किमपि तत्सदृशमाख्येयमनाख्येयं वा सांसृतिकं सुखं न विद्यते विद्यमानमासाद्यतेऽनुभूयते लभ्यते वाऽस्मिन् नामरूपक्रियात्मके जगतीति बोध्यम्। आत्यन्तिकदुःखनिवृत्तिहेतुकात्यन्तिक-सुखात्मको मोक्ष इति मोक्षलक्षणः पुरुषार्थं एव सर्वाभिलषणीयतया पुरुषैरर्थ्यमानतया च स्वेतरपुरुषार्थशीर्षस्थः सुस्थिरीभवतीति गूढार्थः प्रत्येतव्यः[1]।

**सर्वथा सर्वदुःखेभ्यो मुक्तिर्मोक्ष इति स्मृतः।**
**लेशतो दुःखमात्रेऽपि विद्यमाने न तद्भवः॥ २॥**

तदस्य मोक्षलक्षणपुरुषार्थस्य कुतः कथं कुत्र वोद्भव इत्याकांक्षायामभिधीयते— सर्वथा सर्वावस्थासु सर्वतोभावेन सर्वसंसारान्तमिथ्यात्वप्रणिधानेन तत्पार्यन्तिक-स्थितिप्रबोधकाले च सर्वदुःखेभ्य आधिदैविकाधिभौतिकाधिदैहिकेतित्रिविधतापप्रद-प्रतिकूलितवेदनोद्भूतेभ्यः क्लेशेभ्यो या मुक्तिर्मुक्तावस्थितिर्विनिवृत्तिस्तत्प्रवृत्त्यभावरूपा सैव मुक्त्याख्या भवभवत्खेदक्षोणतरमायिकप्रभावादात्मोद्धृतिर्मोक्ष इति स्वरूपप्रकार-निर्दिष्टः स्मृतः कल्पितः प्रतिपादितः स्मृतिबुद्धिविषयीकृतो मन्वादिस्मृत्युक्तपथोपदेशितः श्रुत्यनुगतपथानुमोदितमतानुसरणादिति तात्पर्यम्। किञ्च दुःखमात्र यत्किञ्चिदपि सांसा-रिके क्लेशे लेशतोऽपि अणुपरिमितेऽपि विद्यमाने कुत्रचिदवस्थानमापन्ने विद्यमान-तयाऽनुभूयमाने वा तद्भवस्तस्य मोक्षस्योपलम्भो मुमुक्षूणां न भवतीति भावः। सर्व-विधसंसारजन्यदुःखमुक्त्यात्मको मोक्ष इत्याशयो यावत्संसारस्तावत् तज्जन्यदुःखम्, तत्प्रहाणे तन्मुक्तिः, तादृशमुक्त्याख्यो मोक्ष इत्येकान्तवेदान्ततात्पर्यार्थः[2]।

**आत्मैक्यवादिनामेतन्मतं भेदान्न भिद्यते।**
**अन्यथाऽद्वैतसिद्धान्तभङ्गापत्तिः प्रसज्यते[3]॥ ३॥**

---

१. भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥—मुण्ड० २।३८।

२. तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।—ईशावा० ७।

३. आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन।—तैत्ति० २।९।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।—गी० ६।२१-२२-२३।

तदेतन्मतमास्थेयमनास्थेयं वा ? भेदान्तरेण मोक्षस्यान्यथोपपत्तेश्चेति चेदुच्यते—आत्मनामसंख्यातानां जीवानां देहिनामैक्यमेकत्वमद्वैतधियाऽभेदं वदन्ति ये त आत्मैक्यवादिनस्तेषामेतदुक्तलक्षणलक्षितमात्यन्तिकदुःखनिवृत्तिहेतुकात्यन्तिकसुखात्मको मोक्ष इत्येतन्मतं भेदाद् भेदान्तरेणात्मानैक्यप्रतिपादनोदितबुद्धिभिदोत्थदर्शनान्तर-सिद्धान्तान्न भिद्यते नातिरिच्यते न पृथगवतिष्ठते समेषां दर्शनानामत्रैव तात्पर्यात्, दुःखमात्रप्रहाणार्थमात्यन्तिकसुखाधिगमनार्थमेव समस्तदर्शनान्तराणां प्रवृत्तेर्दर्शनाच्च । तदेतदद्वैतसमन्वयादेव भेदानामेकत्र पर्यवसानात्सम्भवतीति भावः। अन्यथोक्तलक्षण-वैपरीत्येन लक्षणान्तरेऽङ्गीक्रियमाणे यत्किञ्चिद् दुःखसंस्पर्शेऽद्वैतसिद्धान्तस्यैक्येनाभेदेन प्रतिष्ठितस्य समन्वितस्य श्रौतप्रतिपादितस्य परमार्थोद्दिष्टस्य चातीवनिर्दुष्टस्य मतस्य भङ्गापत्तिः क्षयापत्त्याऽनुपपत्तिः प्रसज्यते प्रसक्तिमाप्नोति तदद्वैतसिद्धान्तहानिः स्यादिति तादृश एवाभेदात्मक आत्मैक्यवादिभगवत्पादशङ्करादिमतो मोक्षलक्षणः पुरुषार्थः स्वीकार्य इति तात्पर्यमवधार्यम्[१] ।

**औपाधिकस्य भेदस्य विद्यमानतयाऽप्यसौ ।**
**तल्लयात्पूर्णभावाच्च मोक्षावस्था विशिष्यते ॥ ४ ॥**

भेदस्यावास्तवत्वान्नैरर्थक्यमनुपयोगित्वञ्चेत्युपपाद्यते—उपाधिरुपधीयमाननाम-रूपक्रियादिलक्षणस्तत्प्रयुक्तो भेदो जीवनिष्ठ औपाधिकस्तदवच्छिन्नः कल्प्यते, तादृश-नानोपाधिकृतभेदस्य विद्यमानतयाऽपि साक्षादक्षिलक्ष्यीक्रियमाणतया जगति वर्तमानतया व्यवहारविशेषप्रवर्तनोपादेयतया तस्य सत्त्वेऽपि, अपिना परमार्थतस्तदनुपादेयत्वमिति सूच्यते। तल्लयात्तस्य भेदस्य संसारमात्रस्थितिकस्य लयान्नाशादपगमाच्च परात्मनि निवर्तनादिति भावः। पुनश्च पूर्णभावात्पूर्णत्वप्राप्तेः पूर्णत्वेनात्मनो दर्शनात्पूर्णतया पर्यवसानाच्च मोक्षावस्था मुक्तिस्थितिरात्यन्तिकसुखावाप्तिर्निखिलदुःखनिवृत्तिनिरूपिता पदार्थपरात्मनिष्ठिता विशिष्यते विशेषेण इष्यते, विशेषाधानभानेन प्रमीयते। सेयं मुमुक्षूणामवस्था सकलभेदापगमात्पूर्णत्वपर्याप्त्या पर्याप्नोतीति तत्र निर्विशेष एव तद्गतो विशेषो न तु भेदोदित इति बोध्यम्[२] ।

---

१. आत्मानं चेद् विजानीयादहमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥
—बृहदारण्यके ४।४।१२ ।

२. स एव आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोको
विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः । छान्द० ८।१।५
पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ईश० १।१ ।

**किञ्चिद् दुःखे सुखप्रेक्षा प्रेक्षकाणां न युज्यते ।**
**प्रकाशप्रसरादीषत्तमोभावो यथा तथा ॥ ५ ॥**

सति संसरणशीलसंसारबन्धोद्भूताल्पमात्रदुःखलेशेऽपि कुतः सुखोपलब्धिरित्युद्दिश्यते किञ्चिदिति स्वल्पतमेऽपि देशकालस्थित्यवस्थादिप्रातिकूल्यान्नामरूपक्रियाद्युपाधिसत्त्वे दुःखे क्लेशे अविद्याजनिते विद्यमाने प्रेक्षकाणां परमार्थप्रेक्षोन्मुखीभूतात्मनां मुमुक्षूणां सुखप्रेक्षा दुःखप्रहाणजनितात्मसाक्षात्काररूपनिरतिशयानन्दस्य प्रेक्षा साक्षात्कृतिस्तादात्म्यापत्त्या चिदानन्दानुभूतिर्न युज्यते युक्त्योपपद्यते, शास्त्रोक्ततर्कसङ्गता न सङ्गच्छते, यतश्चास्यात्यन्तिकसुखस्यैकान्तेन निखिलदुःखनिवृत्त्यैव सम्भूतत्त्वादिति भावः । तत्रोपमितिदृष्टान्तो निर्दिश्यते—प्रकाशस्य दिनकरनिशाकरनक्षत्रदीपादिकृतस्य प्रभामण्डलस्य प्रसरात्प्रसृतेः प्रसरणाच्च तमोभावोऽन्धकारसत्ता यत्किञ्चित्तमसोऽवस्थितिर्यथा न युज्यते, तथैव खल्वात्मदर्शनोदितपरात्मप्रकाशप्रकर्षप्रसारात् किञ्चिदपि दुःखं न स्थातुमर्हतीति प्रेक्षावतां साधकानां मुमुक्षूणां सुखप्रेक्षा सुतरां सम्पद्यत इति सङ्गतिरुपमितिदृष्टान्तेन संयोज्येति ।

**स्वातन्त्र्याद् दुःखराहित्यादेकान्तश्रयणादपि ।**
**भेदाभावादथात्मैक्यात्तत्सत्त्वान्मुक्तिरिष्यते ॥ ६ ॥**

अपि चेत्थमियं मुक्तिर्मोक्षलक्षणा कैर्हेतुभिरुपपद्यते इत्याख्यायते—स्वातन्त्र्यात् स्वस्यात्मनस्तन्त्रमनुशासनमात्मानुसन्धानं यमनियमध्यानासनप्राणायामप्रत्याहारादितदुपायानुष्ठानेन स्वस्य तन्त्रणम्,तद्भावात् । दुःखराहित्यात् दुःखस्य त्रिविधस्य पूर्वोक्तस्य राहित्यमभावो यत्किञ्चिदपि दुःखं तत्प्रतिरोधीति तस्य सर्वथा हेयत्वमित्युक्तम् । तादृशजगज्जातकष्टजातस्यासम्पर्कात्, अपीति भिन्नहेतुक्रमद्योतनार्थम् । किञ्चैकान्तश्रयणाद् एकमद्वैतं तस्यान्तो राद्धान्तः सिद्धान्तो वा तदाश्रयग्रहणात्, अथवैकान्तस्य विविक्तस्य जनसम्मर्दशून्यस्य रहोवासस्य, उत वा एकान्तस्यैकस्य जीवात्मनोऽन्तस्य तत्त्वस्याश्रयालम्बनशरणसमाग्रहणादिति नानातात्पर्यार्थः प्रत्येतव्यः । इत्थं च भेदाभावात्सकलसंसारसम्बन्धनिबद्धभिदोपसर्जनात् । अथ चात्मैक्याज्जीवात्मपरमात्मनोरैक्यसम्पादनादात्मोन्नयनेन परात्मतादात्म्यसमधिगमनात् । तत्सत्त्वात्तस्मिन्नात्मनि सत्त्वाद् विद्यमानत्वान्निविष्टत्वादात्मनिष्ठपरमात्मप्रकाशनाच्च मुक्तिर्मोक्षलक्षणेष्यते, स्वाभीष्टा तिष्ठति, इष्टतया पर्याप्यत इति भावः ।

**आत्मानात्मभिदो भाने चिदचित्परिकल्पने ।**
**परमात्मात्मनोश्चैक्ये मुक्तिः स्यात्पारमार्थिकी ॥ ७ ॥**

केयं किल पारमार्थिकी मुक्तिः ? कुतश्च तदुपपत्तिरिति सिद्धान्तसारः सन्दर्श्यते- क आत्मा कश्चानात्मा ? किं सत्यम् ? किं मिथ्येति विवेकबुद्ध्याऽऽत्मनः परमार्थतत्त्व-स्यानात्मनोऽसत्यकल्पिताविद्याप्रपञ्चात्मकस्य जगद्रूपस्य चेति तदुभयसमुच्चायकम् । तयोरात्मानात्मनोर्भिदो भाने पार्थक्येन बोधे विविक्तया बुद्ध्या तदान्तर्यप्रज्ञाने "ब्रह्म सत्यं जगन्मिथ्येति" वेदान्तवाक्यानुसारं प्रत्ययोपगमे, चिच्चैतन्यमचिदचैतन्यं चेतनात्मकं जडात्मकं ज्ञानमज्ञानं चेत्यनयोश्चिदचितोस्तत्त्वातत्त्वयोः परिकल्पने परिकल्पनया-परितः स्मृत्याऽवधारणे वा, ततश्च परमात्मन आत्मनश्चैक्ये जीवात्मपरमात्मनोर-द्वैततत्त्वावबोधे जाते सति पारमार्थिकी परमार्थसम्बन्धनिबन्धिनी परमतत्त्वावाप्ति-सम्पत्तिप्रसविनी मुक्तिर्मोक्षलक्षणात्मिका स्यात् सम्भवितुं शक्नुयादिति बोध्यम् । "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः", "आत्मा वाऽरे द्रष्टव्यो मन्तव्यो निदिध्या-सितव्य" इति श्रुत्युक्तेः, "उद्धरेदात्मनाऽऽत्मानम्" इति गीतोक्तेश्च जीवात्मपरमात्मैक्य-प्रतिष्ठानाच्चिदचित्परिज्ञानात्सत्यत्वमिथ्यात्वपरिबोधाच्च परमार्थसार्थक्येन परा मुक्तिः सम्भवतीति वेदान्ततात्पर्यात् पर्यवसीयते । इयमेव परा मुक्तिः परब्रह्मसविधवर्तिनी मुक्तात्मनामद्वैतिनामभिप्रेता परात्मनि पर्यवस्यति ।

**न प्रियाप्रिययोः स्पर्शो नापि लेशस्तयोः क्वचित् ।**
**निषेधात्सर्वभावानां कैवल्यमिति मन्यते ॥ ८ ॥**

मोक्षो मुक्तिरिति पर्यायमात्रभिन्नाभिधानेन कुत्रचिच्छास्त्रोद्देशे कैवल्यमित्युच्यते, तदपि कैवल्यं जीवात्मपरमात्मैक्योपात्तमुक्तिपदार्थपरतया ततो न भिद्यत इत्युपस्था-पयितुं प्रोच्यते—प्रियमिष्टमप्रियमनिष्टं तयोः काम्याकाम्ययोः पुत्रादिरिप्वादिरूपयो-र्भोग्याभोग्ययोर्वा स्पर्शो योगात्संसर्ग इन्द्रियसन्निकर्षश्च न यत्र नैवास्तीति शेषः । अपि च तयोः प्रियाप्रिययोरिष्टानिष्टसांसारिकपदार्थयोः क्वचित्कस्मिश्चित् स्थाने क्वापि अवस्थाविशेषे सामान्ये वा लेशः कणशोऽप्यवस्थानमंशतोऽपि भानं वा यत्र न स्यादिति भावः । एवं सति सर्वभावानां समग्रजागतिकपदार्थानां प्रियाप्रियाणाञ्च निषेधात् निषिध्यमानतया विसर्जनात् तत्रोदासीनतयाऽनासक्त्या वा पर्युपेक्षणात् कैवल्यं केवलत्वधर्मवदैक्यनिष्ठितं स्वरूपावस्थानं मोक्षलक्षणमिति मन्यते मतानुगत-मङ्गीक्रियते विज्ञैरिति वेद्यम् । कैवल्यमात्मकैवल्यप्रत्यायकत्वान्नेति निखिललौकिक-भावनिषेधाच्च पार्यन्तिकतयाऽद्वैतसिद्धान्तनिर्दिष्टमोक्षाख्यलक्षणपुरुषार्थपर्यवसायि प्रति-तिष्ठतीति गूढाशयो बोध्यः ।

**वस्तुतो नामभेदाच्च स्वार्थभेदो वितन्यते ।**
**स्पर्शास्पर्शादयो भावा विनश्यन्ति परावधौ ।। ९ ।।**

नामभेदात्स्वार्थभेदो न मोक्षलक्षणः पुरुषार्थस्तेन भिद्यत इति प्रतिपाद्यते— वस्तुतो याथार्थ्येन परमार्थेन वेति हेतौ तसिल् । आहोस्विद् वस्तु परमार्थसत् परमात्मतत्त्वम्, ततो भेदे पञ्चम्यास्तसिल् इत्यवधार्यम् । ततो नामभेदादभिधानरूपाख्यानेन भेदोपगमात्स्वार्थभेदः स्वस्य नामाख्यातस्य वस्तुनो भेदः पृथग्भावो वितन्यते विस्तार्यते व्याक्रियते व्युत्पाद्यते वा—"**नामरूपे व्याकरवाणि**" इत्यभियुक्तोक्तेः । पर्यन्ते च स्पर्शास्पर्शादयो वैषयिकस्पृश्यास्पृश्यात्मकधर्मादयो भावाः पदार्थाः परावधौ परमार्थानुसन्धानसान्तसीम्नि परमे चरमे भूम्नि पर्याप्ते सति विनश्यन्ति, विनाशं क्षयं लयं वा उपगच्छन्ति । यावन्तो भेदास्तावन्तः स्वार्थपर्यवसायिनः, पार्यन्तिके परात्मतादात्म्यापन्ने ते भेदाः प्रविलीयन्ते, तत्र केवलं परमात्मप्रत्ययमात्रस्य पर्यवस्थानादिति शास्त्रोक्तगूढाभिप्रायः प्रत्येयः ।

**सोऽहमित्येव यद्भानं तन्मुक्तेर्मार्ग उच्यते ।**
**तत्प्रत्ययोपरोधाच्च तत्प्राप्तौ बाध इष्यते ।। १० ।।**

अथ मुक्तेर्मोक्षलणायाः पुरुषार्थत्वेनेत्थङ्कारस्वरूपतयाऽऽत्यन्तिकसुखात्मत्वे निखिलजगदुद्गतक्लेशनिवर्तकत्वेन प्रतिपादिते तदुपलम्भे[1]को मार्गः समाश्रयणीय इत्युच्यते—सोऽहं परमात्मप्रकाशांशसम्भृतो जीवोऽहमस्मिन् पाञ्चभौतिके पिण्डे निबद्धो वस्तुतः परमात्मैवाहमेतत्कर्मकृताल्पशरीरबन्धननिर्मुक्त इत्येवं प्रकारकं यद्भानं "अहं ब्रह्मास्मीति" प्रत्ययापादनं तदेव स्वात्मनः परमात्मप्रत्यवेक्षणप्रबोधनं मुक्तेर्मोक्षलक्षणायाः कैवल्यादिनानापदाभिहिताया निरतिशयसुखात्मिकाया मार्गः पन्थाः प्राप्त्युपायः साधनरूप उच्यते प्रतिपाद्यते निर्दिश्यते[2] तत्त्वज्ञैर्महात्मभिः शङ्करभगवत्पादप्रभृतिभिरद्वैततत्त्वाभिनिविष्टमतिभिरिति शेषः । तादृशोक्तपरमात्मप्रणिधानप्रतीपपथानुसरणात् तत्प्रत्ययोपरोधात् सोऽहमित्याकारकप्रतिभानप्रतिरोधनादनात्मवस्तुपरिकलनात् तदनल्पव्यापकपरात्मतत्त्वमुत्सृज्याल्पशरीरबन्धाधारेण परिसीमितदेहाभिमानाद् वेत्याशयः । अतश्चोक्तप्रतिरोधहेतोः तत्प्राप्तौ "सोऽहं"माकारकस्य परमार्थबोधस्य परात्मतादात्म्यापत्तिप्रपत्तेरुपलब्धौ बाधः प्रत्यूहः प्रत्यवायः संसारबन्धनिष्पादको भगवत्तत्त्वात्मसाक्षात्कृतिप्रतिरोधकः परमसाध्यानुसन्धानसाधनविरोधीष्यते निरुच्यते ।

---

१. अविद्यायामन्तरे वर्तमानाः····कठ० १।२।५

२. न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तलोभेन मूढम्···।। कठ० १।२।६ ।

**सर्वात्मैक्ये परां काष्ठां प्राप्ते किंस्विद् विनश्यति ।**
**तदभोक्तृतयाऽत्यन्तं दुःखनाशः श्रुतौ स्मृतः ।। ११ ।।**

सर्वत आत्मैकत्वेनानात्मत्वमतत्त्वभूतं क्षयमुपैति तदभोक्तृभावेन च दुःखजातं प्रणश्यतीति निदर्श्यते-सर्वात्मैक्ये सर्वेषां जीवात्मनामेकत्वे परमात्मभावेनैकत्वाभ्युपगमे सर्वतो मिथ्यात्वेन कल्पिताज्जगत आत्मन एव सत्यतया तदेकत्वप्रणिधाने वा **"ब्रह्म सत्यं जगन्मिथ्येति"** श्रुत्युक्तेः । उत वा सर्वेषु पदार्थेषु आत्मैवैकं परमार्थसत्यमित्यस्यैव व्यापकत्वेनैकत्वमनुसन्धेयमिति तदर्थमत्यर्थप्रयत्न आस्थेयः । अतश्च सर्वतोभावेन तस्मिन्नात्मगतैकत्वे परां काष्ठां परमावधिं परमानुसन्धानसीमानमधिगते सति किंस्विद् किमपि लौकिकं वस्तुजातमनात्मपरिकलितं विनश्यति विनाशमुपयाति । आत्मातिरिक्तसमग्रजगन्मात्रस्य विनाशित्वात् । किमित्यनेन कैमर्थ्येनानात्मवस्तूनां वैयर्थ्यम्, स्विदिति पदेन विकल्पतया तेषामनित्यत्वञ्चेति बोध्यम् । पुनश्च तद्भोक्तृतया तेषामनात्मभूतानां लौकिकानां वस्तूनां भोक्तृभावाभावात्, अभोक्तृत्वेनाभोग्यत्वमप्यूह्यम् । तस्मादभोक्तृत्वाद्धेतोरत्यन्तं दुःखनाशस्तेन चात्यन्तिकसुखं मोक्षलक्षणं श्रुतौ वेदोपनिषदादिशास्त्रेषु स्मृतः कल्पितः स्मृतिपदमानोतो बोधितश्चेति भावः ।

**सर्वमात्मैव चावृत्य सर्वतः सम्प्रतिष्ठते ।**
**सर्वथा तन्मयीभावादभोक्तृत्वं निसर्गतः ।। १२ ।।**

कथं भोक्तृत्वं प्रकृतिगतं सांसारिकभोग्यवस्तुषु सम्भवतीति तत्र हेतुरुच्यते— सर्वमिदं नामरूपजातिक्रियात्मकं जगदावृत्याच्छाद्य परिव्याप्यात्मसात्कृत्य चैक आत्मैव परमात्मतत्त्वांशभूतोऽथवा तद्रूपः साक्षात्परमात्मैव, एवकारेण तदन्यजगज्जन्यवस्तूनां मिथ्यात्वमूह्यम् । यथोक्तम्—"स वा अयमात्मा सर्वेषां भूतानामधिपतिः, सर्वेषां भूतानां राजा, तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ।।"
( बृहदारण्यक० २।५।१५ )

तादृशोऽयमद्वय आत्मा सर्वतः समन्तात् सर्वात्मभूतत्वात्सर्वत्रानुस्यूतत्वाच्च सम्प्रतिष्ठते सम्यक् साधु प्रशस्तत्वेन च प्रतिष्ठामाप्नोतीति "सर्वस्य हृदि विष्ठितम्" इति गीतोक्तेः[1] । तदेनमखिलात्मभावभावितमात्मानमनुविद्य संविदङ्गीकारेण सङ्गत्य

१. अनन्तश्चात्मा विश्वरूपो ह्यकर्ता ।। श्वेता० १।९ ।
(क) ज्ञात्वा देवं सर्वपाशापहानिः ।। श्वेता० १।१० ।
(ख) सर्वजीवे सर्वसंस्थे''' ।। श्वेता० १।६ ।
(ग) "तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु सञ्चारो भवति" छान्दोग्य० ८।१।६ ।

सम्मत्य च सर्वथा सर्वास्ववस्थासु सर्वेषु भावेषु सर्वेषु समयेषु च त्रिकालाबाध्यस्वरूप-सन्धानसमाहितेन चेतसा तन्मयीभावादात्मतादात्म्यप्रणिधानात् तादृग्रूप्येण समग्र-भावनोद्भावनात् तत्त्वेन स्वत्वस्य परिणमनाच्च निसर्गतः स्वभावतः प्रकृतिसंसर्गतो न त्वारोपितधर्मतोऽभोक्तृत्वं भोग्यवस्त्वनासक्तिजन्यज्ञानोन्मिषितो भोक्तृत्वाभावः सम्पद्यते, सम्भवति चेति बोध्यम्। जीवात्मत्वे परिच्छिन्नतया भोक्तृत्वं परमात्मत्वे त्वपरिच्छिन्नभावापन्ने तद्भाव इत्याशयः।

**आत्मनो नाप्यचैतन्याज्जडत्वात्प्रस्तरोपमा ।**
**अभोक्तृत्वमसङ्गत्वं निर्लेपत्वं च तत्क्रमात् ॥ १३ ॥**

न खलु देहवदस्य देहिन आत्मतत्त्वस्याचेतनत्वमभोक्तृत्वेनाकर्तृत्वेन जडत्वञ्चेति सहेतुकं प्रतिपाद्यते—अपिरिति पूर्वार्थक्रमद्योतनार्थम्, तेन अभोक्तृत्वेनापि अस्यात्मनः परमात्मतादात्म्यापन्नस्य सर्वव्यापकस्य स्वतः प्रकाशमानस्य सतोऽचैतन्याच्चेतनत्वा-भावाच्चिद्भिन्नत्वात्, जडत्वात् क्रियाशून्यत्वात्कर्तृत्वाभावाद् वा प्रस्तरोपमा पाषाण-साधर्म्यकल्पना न, अस्तीति शेषः। न च चेतनत्वे सत्येव भोक्तृत्वं तदभावेऽभोक्तृत्व-मिति तस्यात्मनोऽचेतनत्वकृतमभोक्तृत्वमिति वाच्यम्, न वा तदकर्तृत्वेन जडत्वम्, तेन प्रस्तरसाधर्म्यकल्पनं कर्तुमुचितम्, तत्रानासक्त्याऽसङ्गत्या निर्लेपतया चाभोक्तृत्वादि-धर्माणां प्रवृत्तत्वात्। **"अनन्तश्चात्मा विश्वरूपो ह्यकर्ता"** इति श्वेताश्वतरोपनिषदुक्तेः तस्यात्मनो विश्वरूपत्वेऽप्यकर्तृत्वमभोक्तृत्वं सर्वात्मकत्वात् सङ्गच्छते, जीवात्मन एव तत्त्वापत्तेः, परमात्मनस्तु तथात्वानापतेश्च। प्रत्युतास्य परात्मभूतस्यात्मनस्तादृशाद-नासक्त्युल्लसितात् क्रमादेकैकशः क्रमानुरोधादभोक्तृत्वं भोक्तृत्वोदासीनत्वमसङ्गत्वं संसर्गशून्यत्वं निर्लेपत्वं विषयवस्तूल्लासलेपत्वपृथक्त्वं चोपयुज्यते पारमार्थिकत्वादिति तात्पर्यमवधार्यम्।

**यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः।**
**देव एकः (आत्मा) स्वमावृणोति स नो दधातु ब्रह्माप्ययम् ॥**

(श्वेत० ६।१०)

**मोक्षावस्थागता काचिद् विशिष्टा दुःखनिष्कृतिः ।**
**तत्सम्भूत्या परावाप्तिर्या सैषा मुक्तिरुत्तमा ॥ १४ ॥**

तत्रापि मोक्षलक्षणे पुरुषार्थे वैशिष्ट्येन प्रत्यवस्थानात् परावाप्त्या काचिदुत्तमा मुक्तिरास्थीयते मुमुक्षुभिरित्यापाद्यते—मोक्षावस्थाऽप्युत्तममध्यमाधमतया त्रिविधोक्ता साधकमुमुक्षूणां त्रैविध्यविभागात्तद्विभागोऽपि कल्पितः। युञ्जानयुक्तमुक्तात्मभेदात् तत्राप्यधममध्यमोत्तमभेदो मोक्षावस्थायामास्थाप्यते। तदत्र तद्वशाद् दुःखनिवृत्त्यादेरपि

तादृक्तत्त्रमूह्यम् । मोक्षस्य मुमुक्षुभिरभिकाम्यस्य परात्म्यैकात्म्यसमवाप्तिस्वरूपस्यावस्था स्थितिर्दशा प्रपत्तिरध्याप्तिरवस्थानवृत्तिश्च, तद्गता तन्निष्ठा काचिदाख्यातुमनर्हा वैलक्षण्यक्षुण्णा निरतिशयेत्येर्थः, विशिष्टा विगतशिष्टत्वं शेषत्वशून्यत्वमशेषजुष्टत्वं यत्तेन वैशिष्ट्येन धर्मेण श्लिष्टा विशिष्टा, निःशेषशेषत्वराहित्यमेवात्र विशिष्टत्वमाख्यातम् । तादृशो विशिष्टा दुःखनिष्कृतिः क्लेशनिवृत्तिः, जगत्तापत्रयोद्धृतिरात्यन्तिको दुःख-निष्कृतिरित्युच्यते । तादृशाशेषदुःखनिष्कृतिसम्भूत्या सम्प्रपत्त्या सम्भवनात्सम्यगुत्प-त्त्युपपत्तेश्च या परावाप्तिः परात्माधिगमः परमात्मसुखोपलब्धिः, तादृरूप्यपूर्णप्रपत्तिश्च सञ्जायते, सैषा श्रुत्यादिसकलवेदान्तशास्त्रसुप्रसिद्धोत्तमा मुक्तिरितीष्यते । इयमेव परा मुक्तिर्मोक्षलक्षणोक्ता कैश्चिदिति बोध्यम्' ।

**ज्ञानं चैतन्यमित्याहुर्ज्ञानी चेतन उच्यते ।**
**बद्धावस्थस्य जीवस्य ज्ञानं भवति दुःखदम् ॥ १५ ॥**

किं चैतन्यम् ? कश्च तद्विशिष्टश्चेतनः ? किञ्च दुःखकारणम् ? इत्युदीर्यते–ज्ञानं ज्ञायमानवस्तुगतावबोधो ज्ञेयपदार्थस्वरूपप्रत्ययो विवेकबुद्धिसंवित्त्यादिपदाभिधेयं ज्ञान-मेव चैतन्यमित्युच्यते । तच्च चैतन्यं चेतनधर्म इत्याहुर्मनीषिणश्छिन्नसंशया महात्मानः। यश्च ज्ञानविशिष्टो ज्ञानी विवेकबुद्धिबोधजुष्टः, स एव चेतनश्चेतनावांश्चैतन्यधर्मा जीव इत्युच्यते । तदेव चैतन्यवज्ज्ञानं बद्धावस्थस्य संसारबन्धनिबद्धस्थितिकस्य देहान्तर्निविष्ट-स्वरूपस्य सीमितस्थानसंस्थस्याङ्गुष्ठमात्रपरिमितात्मभावस्य परिच्छिन्नप्रमाणस्य च जीवस्य (कृते) दुःखं ददातीति दुःखदं क्लेशापादकं भवभवद्भोगभूरिशोकामयभयोत्पा-दकं भवति जायते भवोन्मुखीं वृत्तिमादधातीति ज्ञेयम् । मुमुक्षूणां मुक्तात्मनां महात्मनां च यज्ज्ञानं तन्मुक्तिमोक्षपरानन्दप्रदं भवति, परमात्मप्रकाशप्रसारात्, बद्धात्मनां जीवानां संसारसंसरणशीलानां मुग्धमतीनां तदेव ज्ञानं भ्रमात्मकं दुःखदं भवतीति तात्पर्यार्थो बोध्यः[२]

**सुखदुःखानुभूतिश्च ततो नापैति सर्वथा ।**
**मुक्तावस्थस्य तज्ज्ञानगुणोऽपि प्रविलीयते ॥ १६ ॥**

यतश्च सुखं सांसारिकं दुःखानुविद्धं ततस्तदुभयानुभूतिस्ततो नापयाति तद्वैपरीत्येन मुक्तात्मनः सा व्यपगच्छतीति पर्यवस्थाप्यते—सुखं क्षणिकं लौकिकवस्तुविषयगतं

१. सर्वाजीवे सर्वसंस्थे बृहन्ते, तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ श्वेताश्वत० १।६।

२. "एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।" गी० १५।२०।

स्रक्चन्दनवनितादिभोग्यसमुद्भूतं तात्कालिकमापातमधुरं पार्यन्तिकक्लिष्टकरं विरसावसानमित्यर्थः। दुःखं तादृशसांसारिकसुखानुगतभोगसंसर्गसङ्गतं सान्तमत्यन्त-वेदनोत्पादकं वैरस्यवैमनस्यपरमित्यर्थः, तयोरनुभूतिर्मानसिकोऽनुभवोऽनुभूयमानस्वभाव-पर्यवसायिनी वृत्तिः, शुभानुबन्धिनी दुःखानुवृत्तिकृता मानसी प्रवृत्तिरिति भावः। ततश्चेतनावतो जीवात्सांसारिकात् सर्वथा सातत्येन समन्ततः सर्वतोभावेन च नापैति दूरं नापयाति, तस्य वैषयिकभोगेषु संसक्तत्वात्। तद्वैपरीत्येन तु मुक्तावस्थस्य निर्लिप्तात्मनोऽनासक्तिभावेन निर्विचिकित्समसन्दिहानचेतसा विद्यमानस्य मुक्तात्मनो ज्ञाननिर्धूतदूषणस्य मुमुक्षोः पुरुषस्य (जीवस्य) तज्ज्ञानगुणोऽपि तस्य संसारविषयकृतस्य ज्ञानस्य ममत्वाकारस्य देहत्वाद्यभिमानसम्भूतस्य यो गुणः काम्यत्वाभिरामत्वोत्सुकत्वा-दिरूपप्रवृत्तिजनकः, आसक्तिहेतुकः, संसर्गसंसृष्ट इत्यर्थः। सोऽपि ज्ञानगुणो दुःखापादकः प्रविलीयते प्रकर्षेण विलयं गच्छति। संसारविषयं ज्ञानं निवर्तते, परमात्मविषयज्ञान-मुपजायते तस्य मुक्तात्मनो मुमुक्षोरियमेव मोक्षस्थितिरिति भावः[१]।

**श्रुतिसम्मतसर्वात्मदृष्टेरैक्यं प्रशस्यते।**
**तत्तात्पर्यात्समस्तत्वादात्मैव प्रतिपाद्यते ॥ १७ ॥**

सर्वत्र श्रुतिस्मृत्यादिशास्त्रेषु सर्वात्मदर्शनपरः सकलसंवृत्यपेतस्वरूप एक आत्मैव तात्पर्यतया प्रतिपादितः, स एव मोक्षलक्षणपुरुषार्थोऽर्थनीय इति सिद्धान्तसारः प्रस्तूयते-श्रुतिः श्रूयमाणस्वरोच्चयोचिता ऋगादिमन्त्रोदिता वर्णपदवाक्यविशेषिताऽनाद्यपौरुषेय-प्रकल्पिता स्वयम्प्रकाशा काचिच्छन्दोमयी प्रणिधानपरिफलिता वाक्, तेन श्रूयते इति श्रवणमिति श्राव्यत इति श्रावणमिति श्रवणविषयीकरणमिति श्रूयतेऽनयाऽस्मिन्निति वा बह्व्यो व्युत्पत्तयस्तत्तच्छ्रवणधर्मानुसारिण्यः संगच्छन्ते। तादृशश्रुतिसम्मता श्रौत-सिद्धान्तसारसर्वस्वभूताऽऽत्मदृष्टिरात्मतत्त्वप्रतिपादनपरं दर्शनं तदन्तरैक्यमेकत्व-मद्वैततत्त्वं ब्रह्मापरपर्यायं परमार्थसत् प्रशस्यते, श्रुतिप्रशस्तवचनैरुपन्यस्यते[२]—

"तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ईशावा० ७।)
"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तैत्ति० २।९)
"अयमात्मा ब्रह्म सर्वानुभूः (बृहदा० २।५।१९)

---

१. (क) न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ गी० ४।३८।
(ख) सा काष्ठा सा परा गतिः,
यस्मात्परं नापरमस्ति किञ्चित्। श्वेता० ३।९।

२. ब्रह्मैवेदममृतं पुरस्ताद् दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ मुण्डको० २।२।११।

इत्येवम्भूतैः शतशः प्राशस्त्यवचनोपन्यासैः श्रुतिषु तदुपलक्षणेन स्मृत्यागमादिशास्त्रेषु तदेवात्मैक्यतत्त्वं परात्मप्रकाशप्रकर्षेण ब्रह्माद्वैतसम्मतमतमशेषभेदोत्सारणपूर्वकमपूर्वमुन्नीयते प्रमीयते प्रकाश्यते परमात्मतत्त्वविद्भिः श्रीमच्छङ्करभगवत्पादप्रभृतिभिर्वेदान्तराद्धान्तमुद्योतयद्भिर्विद्वद्भिरिति गूढाभिप्रायो बोध्यः। किञ्च—तस्मात्तत्रोक्तात् श्रुत्यादिशास्त्रोपदिष्टात्तात्पर्यात्तत्परकोचितवचोवितानात् तदुद्देश्यकयत्नसंरम्भात् तत्प्राधान्येन प्रवर्तनाच्च समस्तत्वात् सर्वत्रानुस्यूतत्वात्सर्वसद्भावात् सर्वस्वभूतत्वाच्च स एव आत्मैव जीवेश्वरादिनानारूपोपादानप्रतानेन प्रतिपाद्यते प्रतिपाद्यत्वेन प्रदर्श्यते निर्दिश्यते प्रशस्यते चेति सारार्थोऽवधार्यः, एवकारस्तदन्ययोगव्यवच्छेदायेति बोध्यम्। तादृशात्मदर्शनोदिताद्वैततत्त्वसुखावबोध एव मोक्षलक्षणः पुरुषार्थ इत्यास्थेयम्।

**किं पश्येत्? किन्नु जानीयात्? दृष्टिज्ञानभिदा? कुतः।**

**तदभावप्रभानत्वे तत्सद्भावकथा वृथा ॥ १८ ॥**

दर्शनं ज्ञानमित्युभयं भेदाभावात्तस्य परात्मनः सत्तापर्यवसितं तिष्ठतीति सन्दर्श्यते—किं पश्येत्? स्वयमेव परमात्मतादात्म्यापन्नो जीवस्तदतिरिक्तं किमन्यत्तत्त्वं द्रष्टुमिच्छेत्? सर्वत्रैकत्वेन व्यापकत्वेन परात्मन एव विद्यमानत्वात्। किञ्च किन्नु जानीयात्? किमन्यत्तर्कवितर्काभ्यां विषयीकृत्य बुद्ध्या ज्ञातुं यतेत? ज्ञातृज्ञेयज्ञानरूपतया तस्यैवैकस्य परात्मभावस्य संस्थितत्वात्। अतश्च दृष्टिज्ञानयोर्दर्शनबोधयोरात्मसाक्षात्कारतद्विषयकभानयोश्च भिदा कुतः पार्थक्यं मिथोऽतिरिक्तत्वं कुतः कस्माद्धेतोः स्यात्? न तयोः कदापि भेदोद्भव इति भावः। अपि च तस्या तादृशदृष्टिज्ञानजन्यभिदाया अभावस्य प्रभानत्वे सति सर्वज्ञदर्शनज्ञानजनितभेदापगमे जाते तत्सद्भावकथा तस्या भिदाया भेददृष्टेर्वा सत्त्वेन भावोऽस्तित्वं सत्तायां परमार्थतोऽवस्थानमित्यस्य कथा चर्चाऽऽख्यानं वृत्तिर्वा वृथा अपार्था मिथ्या अस्तीति शेषः[१]। सर्वासु वृत्तिषु सर्वेषु भावेषु च सर्वात्मकत्वेनैकस्यैवात्मनः परात्मप्रकाशप्रतिभासमानस्य सत्त्वात् न तद्गतो दर्शनज्ञानकृतभेदो युज्यत इति भावः।

**जडत्वान्नैतदुक्तं स्यात्सर्वात्मत्वात्प्रयुज्यते।**

**दर्शनज्ञानभेदादेरभावप्रतिबोधनात् ॥ १९ ॥**

एतदखिलं दर्शनज्ञानात्मकं परमार्थतत्त्वं भेदापेतं सर्वात्मत्त्व एवोक्तं प्रयुक्तं भवति न जडत्वे तद्भावानुभूतिरित्यापाद्यते—एतदुपर्युक्तं परमार्थगतदर्शनज्ञाननिष्ठभेदाप-

---

१. येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः।
तेनेशितं कर्म विवर्तते ह पृथ्व्यप्तेजोऽनिलखानि चिन्त्यम्॥ श्वेता० ६।२।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥ कठ० १।२।२०।

नयनं सर्वात्मत्वादेव सर्वत्रात्मनो व्यापकत्वात् तद्भावेन भावितत्वाच्च पदार्थानां परमार्थप्रोतत्व एवोक्तं सत्प्रयुज्यते प्रयुक्तं भवति, न तु स्वार्थगतभेदबुद्धिव्यवसायेन व्यहसीयते, कथमपि कुत्रचिदिति भावः। जडत्वाज्जाड्यजनितमोहान्नैतदुक्तं भवति। नापि तदुपरोधे प्रयुक्तं भवतीति तात्पर्यम्। तस्माच्च सर्वथा दर्शनस्य ज्ञानस्य च भेदादेः पृथग्भावबुद्धिगताज्ञानस्य च प्रतिबोधनात्प्रत्यवमर्शनात्प्रतिभानात्प्रत्ययोपगमाच्च तद्गतभिदोपसंहारः परात्मभावोन्मेषः तादात्म्यापत्तिर्ब्रह्माद्वैतप्रपत्तिस्तज्जन्यमात्यन्तिकसुखावाप्तिर्मुक्तिलक्षणा मोक्षाख्यपुरुषार्थतया समधिगम्यते मुमुक्षुभिर्महात्मभिरिति भगवत्पादशङ्करतदनुयायिनामाचार्याणां वेदान्तविदुषामभिमतं मतं यथामत्युपस्थापितमास्थेयम्।

**यदा सन्दर्शनादीनां साधनानां विनाशनम्।**
**तदा नो तत्प्रयुक्तत्वात् साध्यज्ञानादिभावना ॥ २० ॥**

यद्यपि साधनाधीनं साध्यज्ञानमथापि साध्यावाप्तौ तन्निवर्तत इत्यभिसन्धीयते–यदा यस्मिन् समये मुक्त्याख्यमोक्षलक्षणपुरुषार्थाधिगमो जायते, यस्मिंश्च सन्दर्शनादीनां सम्यग्दर्शनमनननिदिध्यासनासनानुध्यानोपासनादीनां साधनानां मोक्षसाधनहेतूनां साध्यस्य साध्यमाननिमित्तानामित्यर्थः। विनाशनं विलय उपरमोऽवसानं वा भवतीति शेषः। तदा मोक्षाधिगमे सति तत्प्रयुक्तत्वात्साधनप्रयोज्यतया तद्विषयीकृतत्वात् साधननिष्ठप्रयोजकतानिरूपितसाध्यनिष्ठप्रयोज्यतया च साध्यज्ञानादिभावना साध्यत्वादेर्मोक्षादेः पुरुषार्थस्यादिपदेन परमात्मसाक्षात्कारप्रतिपन्नात्मन इति बोध्यम्। तादृशी भावना वृत्तिः साधनकृता साध्यभावनादृष्टिरिति यावत्। नो भवतीति शेषः। इयमेव नित्यमोक्षप्रतिष्ठेत्युच्यते। यथोक्तं भगवद्गीतायाम्—"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम"। इत्थञ्च मोक्षतत्साधनयोर्मोक्ष एव पारमार्थिकः पर्यवतिष्ठते तत्साधनं तु तत्प्राप्त्यनन्तरं हेयत्वादपारमार्थिकमित्यवसेयम्।

**एवं मोक्षस्वरूपस्य संक्षेपाच्छङ्कराध्वना।**
**तत्प्राप्तेः साधनस्यापि विमर्शः श्रुतिसम्मतः ॥ २१ ॥**

एवमुपर्युक्तप्रकारकाद्वैतसिद्धान्तानुसारं मोक्षस्वरूपस्य मोक्षाख्यचरमपुरुषार्थस्य लक्षणोपपादनं समासेन श्रीमच्छङ्करभगवत्पादप्रतिष्ठापितपथमनुसृत्य तथा च तादृशलक्षणलक्षितस्य तस्योपलब्धेर्हेतुभूतस्योपायप्रायसाधनस्य च श्रुतिशास्त्रानुमोदितः परमार्थपरामर्शप्रदर्शितो विमर्शो विचारः स्वबुद्धिकृतो विवेको प्रस्तुतो मया कारिकाव्याख्यानवृत्तिविरचनेन विदुषां सचेतसां चेतःसमावर्जनायेति कृतं पल्लवितेन। ●

---

१. ज्ञात्वा देवं सर्वपाशापहानिः, क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
तस्याभिधानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥ श्वेता० १।११।

# मीमांसायामितिकर्तव्यतया धर्मतत्त्वविमर्शः

**श्रुतिसमर्चितवाक्यविचारतो**
**निखिलधर्मनिगूढनिदर्शनम् ।**
**जगति दर्शयते निगमोन्नये**
**मनसि जैमिनये मुनये नमः ॥ १ ॥**

अथ पूजितविचारो मीमांसा, स च वेदविहितयागादिना प्रवृत्तिप्रयोजको भवति। तत्रेतिकर्तव्यता प्रकारपर्यवसायिकर्मानुष्ठानात्मिका क्रियारूपा, तयैव धर्मतत्त्वविमर्शो मीमांसाशास्त्रोद्दिष्टः पर्यवतिष्ठते। अतश्च मीमांसोपदिष्टविधिनिर्दिष्टेतिकर्तव्यताकधर्मतत्त्वविमर्शो हि सर्वशास्त्रोपकारको विशिष्य साहित्यशास्त्रानुयोगीति तद्विषये किञ्चिद् विविच्यते—

**विध्यर्थवादमन्त्राणां स्मृतेः प्रामाण्यनिर्णयात् ।**
**मीमांसादर्शनं नूनं धर्मतत्त्वनिदर्शनम् ॥ २ ॥**

विधीति। विधानात्मकः प्रयोजनवदर्थविधानेन यश्चाप्राप्तमर्थं विधत्ते स विधिरित्युच्यते, यथा—"अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यत्र प्रयोजनवद्धोमं विधत्ते विधिः, तेन अग्निहोत्रहोमेन स्वर्गं भावयेदिति तात्पर्यं गृह्यते। इत्येवं सामान्यविधिस्वरूपं परिज्ञेयम्।

अर्थवादः प्रशस्तिवचनम्, "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवाक्यैस्तत्र तत्र श्रुतिषून्नीयते। मन्त्रो मन्त्रणान्मननाद् वा स चानेकविधः श्रौतस्तेषां विध्यर्थवादमन्त्राणां स्मृतेः स्मरणात्तत्तत्प्रकरणेषूपस्थित्या, तत्र च प्रामाण्यनिर्णयादनुकूलतर्कोपन्यासेन याथार्थ्यनिर्देशात् मीमासादर्शनं परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलकं मीमांसाख्यं तत्त्वज्ञानात्मकं दर्शनं शास्त्रं खलु नूनं समग्रसन्देहशून्यं निर्विचिकित्सं धर्मतत्त्वस्य विधीयमाननिखिलयागदिकर्मानुष्ठानसारस्य निदर्शनं निकषायमाणमादर्शभूतमुदाहरणमन्यशास्त्रापेक्षया वैशिष्ट्येनोपयुज्यत इत्याशयः।

**चोदनालक्षणोऽर्थो यो धर्मो यागक्रियोदितः ।**
**श्रुत्यर्थविहितः सोऽयं स्वर्गसौख्याय सम्मतः ॥ ३ ॥**

चोदनेति। चोदनेति प्रेरणा प्रवर्तना प्रवृत्तिरूपा तल्लक्षणोऽर्थः प्रवृत्तिप्रवर्तकत्वेन प्रत्यायितः प्रयोजनात्मकश्च यागादिक्रियोदितो यज्ञकर्मोद्दिष्टस्तन्निर्दिष्टश्च यो

वेदविहितो विश्रुतो धर्मो धारणार्थकः, किञ्च श्रुत्यर्थविहितः तत्र तत्र श्रुतिवाक्येषु तदर्थेषु विधिनोपदिष्टः सोऽयं तत्तच्छ्रौतवाक्यप्रकरणोपात्तः स सुप्रसिद्धोऽयं धर्मः कर्तव्यतयोपास्यः स्वर्गसौख्याय स्वर्गीयसुखावाप्तये सम्मतः सम्यङ्मतेनोपात्तः सिद्धान्तितो मीमांसकैरिति शेषः ।

**उपोद्घाततयाऽऽख्यातकर्मभेदार्थदर्शनम् ।**
**प्रयोगस्तत्स्वरूपं च नित्यकाम्यक्रियाविधिः ॥ ४ ॥**

उपोद्घातेति । उपोद्घात आरम्भार्थकः, तत्तयाऽऽरम्भणीयार्थद्योतकतयाऽऽख्यातं क्रियात्मकं व्यापारविशेषात्मकं प्रत्ययगतं भावनोच्चायकमित्यर्थः । कर्म यागादिधर्मानुष्ठानात्मकम् । तद्भेदाः पृथक् पृथक्प्रकरणनिर्दिष्टाः फलोपधायकाः । तत्रार्थदर्शनं फलोपधानं प्रयोजनाधिगमनं स्वर्गादिसुखादृष्टफलनिर्देशनमित्यर्थः । प्रयोगो विधीयमानो विधिः, मन्त्रोपदिष्टो तत्तद्वेदवाक्येषु विहितः । तत्स्वरूपं तत्तत्प्रयोगविधानलक्षणम्, चेतिक्रमद्योतनार्थम् । नित्यकाम्यक्रियाविधिर्नियतेष्टकर्मानुष्ठानविधानमित्यर्थः । 'स्वर्गकामो यजेते'ति निश्चिताभिलषणीयफलोद्देश्यकयागादिधर्माचरणं मीमांसाशास्त्रे मुख्यतया निरूप्यमाणमस्तीति तात्पर्यम् ।

**प्रमाणेऽप्यपवादोत्थस्थाननिर्देशनं क्वचित् ।**
**प्रयोगे कर्मभेदे वा वाक्यार्थे प्रविधीयते ॥ ५ ॥**

प्रमाण इति । प्रमाकरणं यथार्थप्रत्यायनं प्रमाणम्, तत्रापि क्वचिदपवादस्थले, अपवादश्च प्रमाणापेतस्तन्निरपेक्षो ग्राह्यस्तदुत्थं तेनोम्भितं स्थानं प्रकरणादिकं तस्य निर्देशनं प्रमाणनिरपेक्षं विधानं कुत्रचित्प्रयोगे वाक्यादीनां तदर्थानां च, वेति विकल्पे । अथवा कर्मभेदे भिन्नकर्मानुष्ठाने वाक्यार्थे श्रुतिवाक्यार्थसन्दर्भे प्रविधीयते, प्रकृष्टतया विधीयमानत्वेनोपादीयत इति भावः ।

**श्रुतिर्लिङ्गं च वाक्यं च प्रकृतं स्थानमित्यथ ।**
**समाख्या पारदौर्बल्यात्प्रामाण्यं प्रतिपद्यते ॥ ६ ॥**

श्रुतिरिति । श्रूयमाणस्वरूपा 'निरपेक्षो रवः श्रुतिः' श्रूयतेऽनयेति व्युत्पत्तेः श्रुतिर्मन्त्रपदवर्णवाक्येषु वेदोक्तेषु संगच्छते । लीनमर्थं गमयति बोधयतीति लिङ्गं सहेतुकमानुमानिकं प्राकृतमिति, चेति भिन्नक्रमार्थकम्, पदोच्चयो वाक्यं नित्यानित्योभयात्मकम्, श्रौतं नित्यमश्रौतमनित्यमितरदुभयात्मकं चेति । प्रकृतं प्रकरणात्मकं प्रसङ्गोपेतं तन्निर्दिष्टं च । स्थानं स्थितिस्थापकं तत्र तत्र श्रौतवाक्येषूद्दिष्टम् । समाख्या व्याहृतिः समाख्यानरूपा । तत्र श्रुतेरपेक्षया लिङ्गस्य लिङ्गापेक्षया वाक्यस्य, वाक्यापेक्षया स्थानस्य स्थानापेक्षया समाख्यायाश्च पारदौर्बल्यात्परतो न्यूनबलत्वात् पूर्वा-

पेक्षयाऽपरस्य क्षीणबलत्वेन श्रुतिवाक्येषु प्रामाण्यं याथार्थ्यबोधौपयिकहेतुत्वं प्रतिपद्यते परिज्ञायते। विस्तरभिया न निर्दिश्यते तत्तदुदाहरणमाकरग्रन्थेषु द्रष्टव्यम्।

**अर्थप्राशस्त्यमास्थाय श्रुतिः प्राबल्यमृच्छति।**
**पूर्वपूर्वप्रकर्षेण प्रमाणत्वपरिग्रहः ॥ ७ ॥**

अर्थेति। अर्थप्राशस्त्यं पदवाक्यार्थगतप्रकृष्टत्वम्, तदास्थाय वाक्यार्थबलवत्त्वमाश्रित्य श्रुतिः प्राबल्यं प्रकर्षेण विनियोग प्राथम्यमृच्छति गच्छति, तस्या निरपेक्षत्वात् स्वातन्त्र्येण विधेयत्वाच्च। अपि च पूर्वः पूर्वः प्रकर्ष उत्तरोत्तरापेक्षया तेन प्रमाणत्वस्य तत्तद्गतस्य विधिवाक्येषु परिग्रहः पर्युपस्थापनं प्रामाण्यग्रहो भवतीति शेषः। प्रामाण्यं निरपेक्षं सापेक्षञ्चेति द्विविधम्, तत्र श्रुतेरेव तन्निरपेक्षत्वमन्येषां च सापेक्षत्वमिति बोध्यम्।

**मन्त्रदेवहविर्द्रव्यविनियोगविधित्सया।**
**आवापोद्वापयोस्तेषां प्रामाण्यं प्रणिधीयते ॥ ८ ॥**

मन्त्रेति। मन्त्रास्तत्तच्छ्रुतिवाक्यरूपा मन्त्रणमननोच्चारणात्मकाः, देवा इन्द्राग्न्यादयो हविर्हवनीयं द्रव्यं तत्तद्देवतोद्देश्यककल्पितमाज्यादिकम्, तेषां यो विनियोगस्तत्र तत्र प्रकरणादिनिर्दिष्टविधिषु क्रियात्मको विशिष्टोपयोगस्तस्य विधित्सया विधातुमिच्छया विधिव्याहृतिकर्मानुष्ठानवाँञ्छया तेषामुपर्युक्तानां आवाप आहरणम्, उद्वाप उद्धरणम्, तयोर्विनियोगविधानेषु ग्रहणाग्रहणयोः प्राप्ताप्राप्तयोश्च प्रामाण्यं प्रणिधीयते विनिश्चीयते, तेषु कस्यावापः कस्योद्वाप इत्यत्र तत्तत्प्रमाण्यं निर्णीयत इत्यभिप्रायः।

**इतिकर्तव्यतात्वेन सप्रकारविधिश्रुतिः।**
**स्वर्गाख्यफलमुद्दिश्य यागधर्मानुबन्धिनी ॥ ९ ॥**

इतिकर्तव्यतात्वेनेति। इतीति प्रकारपर्यवसायि, कर्तव्यता क्रियात्मिका, तेन प्रकारत्वावच्छिन्नकर्मत्वानुष्ठानमित्यर्थो गृह्यते। अतश्चेतिकर्तव्यतात्वेन सप्रकारविधिश्रुतिः प्रयोगानुगतविधिश्रवणं जायते। सा च तादृशश्रुतिः स्वर्गाख्यफलं सुखात्मकस्वर्गीयप्रयोजनमुद्दिश्याभिलक्ष्य स्वोद्देश्यं परिकल्प्य, यागधर्मानुबन्धिनी यजनक्रियानुगामिनी 'स्वर्गकामो यजेतेति' यागादिधर्मानुष्ठानोपयोगिनी भवतीति भावः।

**इति शब्दः प्रकारस्थो धर्मियागविशेषकः।**
**तद्विधिः श्रुतिसम्प्रोक्तो भाव्यः कर्तव्यतात्मकः ॥ १० ॥**

इतीति। इतिशब्दः प्रकारस्थः विधानद्योतकत्वात्प्रकरणोपस्थापकत्वाच्च। स च धर्मी यागादिस्तस्य विशेषकः विशेषाधायकत्वाद् विशिष्टविधिनिरूपकत्वादु-

पस्कारको भवति। तद्विधिश्च यागादिनिरूपकस्तन्निष्ठश्च श्रुतिसम्प्रोक्तः श्रुतिषु तद्वाक्येषु सम्प्रोक्तः सम्प्रतिपादितः, स च ( विधिः ) कर्तव्यतात्मकः कर्तव्यानुष्ठानरूपः, यागादिक्रियानुकूलो भाव्यः भावनाविषयीकर्तव्यो भवतीति शेषः। इतिकर्तव्यतया धर्मियागादिविशिष्टविधिः श्रुतिसम्मतो भावनयाऽङ्गीकर्तव्यो भवतीति भावः।

**तत्र साक्षादसाक्षाद्वा पठितश्रुतिवाक्यतः।**
**देवताद्रव्यसम्बन्धस्थापनं फलवत्स्मृतम् ॥ ११ ॥**

तत्रेति। तत्र विधिप्रधानेषु वाक्येषु साक्षादव्यवहितप्रकारेण, असाक्षाद्व्यवहितविधानेन वेति विकल्पार्थकम्, पठितश्रुतिवाक्यतस्तत्र तत्रोच्चरितश्रुतिपदोच्चयात्, देवताद्रव्यसम्बन्धस्थापनं देवतोद्देश्यकाज्यादिद्रव्यसंयोगविधानं फलवत् सप्रयोजनं स्वर्गादिफलोपधायकं स्मृतं कल्पितं तत्र तत्र स्थलेषु प्रकरणेषु वेत्यभिप्रायः।

**यावद्यागार्थसम्बन्धा धर्माः कर्मानुबन्धिनः।**
**तावत्स्वर्गफलोद्दिष्टा इष्टाः कर्तव्यताश्रिताः ॥ १२ ॥**

यावदिति। यावद्यागार्थसम्बन्धा यावन्तोऽपि यागाद्यर्थगताः सम्बन्धाः प्रतिपाद्यप्रतिपादकादयोऽनेकविधाः कर्मानुबन्धिनः क्रियानुविधायिनो धर्मा निःश्रेयससाधनीभूताः प्रवृत्तिलक्षणास्तावत्स्वर्गफलोद्दिष्टास्तावन्तः समग्राः स्वर्गफलोद्देश्यककल्पनोदिताः कर्तव्यताश्रिताः कर्तव्यतयोपगताः क्रियानुगता भाव्यमानभावनैकभाव्या श्रुत्युपदिष्टा इष्टा सप्रयोजनमभीष्टा भवन्तीति बोध्यम्।

**चोदना प्रेरणाऽऽख्याता भावना व्यापृतिः परा।**
**धर्मस्तल्लक्षणः सिद्धस्तदर्थः स्वःपदं सुखम् ॥ १३ ॥**

चोदनेति। चोदनेति प्रवृत्तिप्रयोजिका प्रेरणा प्रवर्तना यागाद्यनुष्ठानेष्वाख्यातोक्ता निरूपिता धात्वर्थबलादित्यर्थः। भावना भाव्यमानरूपा व्यापृतिर्वृत्तिर्व्यापारो वा भावकानुष्ठितेति, सा च परा यागाद्यर्थपरोत्कृष्टा च श्रुतिप्रोक्तत्वादिति बोध्यम्। तल्लक्षणश्चोदनात्मकभावनात्मकव्यापृतिपरत्वाद् धर्मस्तद्रूप एव सिद्धो यागादिस्तदर्थस्तादृशधर्मरूपयागादेरर्थश्च स्वःपदं स्वर्गस्थानीयं सुखं निर्वृतिरिति कार्यकारणभावानुगतः क्रमो बोध्यः।

**यत्र निर्व्यवधानेन श्रुतिर्द्रव्यानुयोगिनी।**
**तत्र लिङ्गाद्यपेक्षातस्तत्प्राधान्यं विधीयते ॥ १४ ॥**

यत्रेति। यत्र विधीयमानकर्मणि निर्व्यवधानेन साक्षादव्यवहितस्वरूपेण स्वेतराप्राप्तेश्च, श्रुतिर्निरपेक्षस्वरूपा द्रव्यानुयोगिनी हविराज्यादिद्रव्यानुयोगे प्रवर्तते,

द्रव्याद्यनुयोजयति वा, तत्र लिङ्गादीनामादिपदेन वाक्यप्रकरणस्थानसमाख्यानां ग्रहणम्। अपेक्षातोऽनिवार्यतया तत्प्राधान्यं श्रुतेः प्राबल्येन प्रधानत्वं विधीयते विधिनाङ्गीक्रियते विधित्वेनोच्चीयत इत्याशयः।

**लिङ्गतोऽनुमितं यत्तच्छ्रुतिवाक्यं प्रवर्तते।**
**मन्त्रार्थविनियोगे साऽनुमिता श्रुतिरुच्यते ॥ १५ ॥**

लिङ्गत इति। लिङ्गतो हेतुभूतादनुमितमनुमानविषयीकृतं लिङ्गपूर्वकत्वेनानुमीयमानमित्यर्थः। यन्निर्दिष्टं तदुच्चार्यमाणं श्रुतिवाक्यं तत्र तत्रोक्तं कर्मानुष्ठानसन्दर्भेषु प्रवर्तते प्रवृत्तिमद् भवति मन्त्रार्थविनियोगे मन्त्राणामर्थानुकूलविनियोगविधौ सा लिङ्गहेतुकत्वादनुमिताऽनुमीयमानरूपा श्रुतिरुच्यतेऽभिधीयते, लिङ्गहेतुकानुमितिक्रियोपस्कृता सा श्रुतिरित्यवसेयम्।

**अर्थप्रकाशने विभ्रत्सामर्थ्यं लिङ्गमिङ्गितम्।**
**लीनमर्थञ्च गमयच्छ्रुतेरप्यनुमापकम् ॥ १६ ॥**

अर्थेति। अर्थः पदार्थवाक्यार्थरूपः, तस्य प्रकाशन उन्मीलनेऽभिव्यञ्जने वा सामर्थ्यं शक्तिमर्थप्रकाशकत्वरूपं न तु वाचकत्वादिकमत्रोह्यं तस्य तदयोगात् स्वातन्त्र्येण प्रवृत्तत्वाच्च। तादृशं सामर्थ्यं बिभ्रद् दधल्लिङ्गमिङ्गितं निर्दिष्टमूहितं कल्पितमित्यर्थः। तच्च लीनमर्थं तत्तद्वाक्येषु गूढमभिप्रायं गमयत्प्रकाशयदाविष्कुर्वच्छ्रुतेरपि सर्वप्रधानाया अनुमापकं ज्ञापकं सहेतुकसूचकं भवतीति लिङ्गस्य वैशिष्ट्यं बोध्यम्।

**प्रत्यक्षमनुमानोत्थं द्विविधं वाक्यमिष्यते।**
**आकाँक्षायोग्यतासत्तिसान्वितार्थपदोच्चयः ॥ १७ ॥**

प्रत्यक्षेति। प्रत्यक्षं साक्षादनुमानिरपेक्षं स्वतन्त्रमित्यर्थः। अनुमानोत्थमनुमित्योदीयमानमानुमानिकमित्यर्थः। तदेतद् वाक्यं द्विविधं द्विभेदात्मकं प्रत्यक्षानुमानाभ्यामिति यावत्। इष्यते व्यवस्थाप्यते कल्प्यते चेति। तच्च वाक्यमाकाँक्षा श्रोतृजिज्ञासारूपा योग्यताऽर्थप्रकाशनार्हता संकेतितार्थबोधकतारूपाऽऽसत्तिः सन्निधिर्निर्व्यवधानेन पदोपस्थितिः सान्वितार्थपदानां समन्वितवाच्यार्थसहितसुबन्ततिङन्तानामुच्चयः समूहो व्यवसीयते वाक्यत्वेनाभिधीयमानं व्यवह्रियमाणं च भवतीति बोध्यम्।

**भावनार्थोपकार्येच्छाकारि साक्षात्तदुच्यते ।**
**प्रकृताद्युपरुद्धं चेदनुमित्यात्मकं भवेत् ॥ १८ ॥**

भावनेति । भावना भाव्यमानरूपव्यापारविशेषः, तदर्थो यागादिस्तस्योपकार्योपस्करणीयेच्छा प्रवृत्तिस्तत्कारि कारकं यत्साक्षादव्यवधानेन तद्धि लिङ्गं स्वतन्त्रमुच्यतेऽभिधीयते; साक्षादव्यवहितं यल्लिङ्गमुच्यमानं भवतीति भावः । यच्च प्रकृतादिभिः प्रकरणस्थानसमाख्याभिरुपरुद्धं व्यवहितं जातावरोधं चेत्तदनुमित्यात्मकमनुमानाकारं हेतुहेतुमद्भावानुबन्धित्वात्तद्रूपं भवेत्कल्पितं स्यादित्याशयः ।

**उभयार्थोभयाकाँक्षा प्राहुः प्रकरणं हि तत् ।**
**श्रुतानुमितभेदाभ्यां द्वैविध्यमनुविन्दति ॥ १९ ॥**

उभयार्थेति । यत्रोभयार्थं प्रधानाङ्गोभयोपकारोपकार्यप्रयोजनिकाऽऽकाँक्षा प्रवर्तना भवति तद्धि क्रियान्वितं प्रकरणं प्राहुराचार्या इतिशेषः । तदपि श्रुतं श्रौतोक्तमनुमितमनुमितिप्रोक्तमित्याभ्यां भेदाभ्यां श्रौतानुमानिकविशेषाभ्यां द्वैविध्यं द्विविधभावं प्रकारद्वयमनुविन्दति प्रोक्तभेदद्वये पर्यवस्यतीत्यवसेयम् ।

**यथासंख्यकृतात्पाठानुरोधान्मन्त्रयोजने ।**
**प्रथमः प्रथमेऽन्योऽन्यं तेनैव विनियोज्यते ॥ २० ॥**

यथेति । यथासंख्यकृतादुचितक्रमनिर्देशात्संख्यानुसारिमन्त्रवर्णानुविधानाद् वा मन्त्रयोजने मन्त्राणां विनियोगे प्रथमःपूर्वोक्तः प्रथमेऽन्वेतीति शेषः, इत्थमन्योऽन्यं परस्परं तेनेव प्रकरणेन न तु तदन्येन विनियोज्यते विनियोगविधावुपयुज्यते । प्रकरणं हि मन्त्राणाँ विनियोजने कारणीभूतं भवति मिथो विनियोगस्तेषां प्रथमद्वितीयादिक्रमानुरोधात् प्रकरणप्रामाण्यादेव निश्चीयत इत्याशयो बोध्यः ।

**पाठस्थानविशेषे तूभयाकाँक्षाऽनुमीयते ।**
**तेनैकवाक्यता लिङ्गं ततस्तेन श्रुतिः क्रमात् ॥ २१ ॥**

पाठेति । पाठ उच्चारणात्मको मननात्मकश्च तत्स्थानविशेषे विशिष्टस्थले, त्विति समुच्चयार्थकम्, उभयाकांक्षा प्रधानतदङ्गप्राप्तिरूपाऽनुमीयतेऽनुमित्याऽवधार्यते, उभयप्राप्तिरनुमानेन निश्चीयते, तेन चानुमानेनैकवाक्यता वाक्यत्वेनैकत्वं लिङ्गमित्याख्यायते, ततश्च तेनानुमानैकवाक्यतात्मकेन लिङ्गेन क्रमात् प्रथमक्रमनिर्देशाच्च श्रुतिः पर्याप्नोति, तस्या एव क्रमप्राथम्येन प्राप्तत्वादिति भावः ।

**स्थानमप्युभयाकाँक्षानुमायास्तत्प्रमापकम् ।**
**दृष्टञ्चानुमितं द्वेधा समाख्यातो बलाधिकम् ॥ २२ ॥**

स्थानमिति । स्थानं पञ्चमप्रमाणं तत्क्रियान्तर्निर्दिष्टमपीति पूर्वोक्तलिङ्गादिवदित्यर्थद्योतकम्, उभयाकांक्षानुमायाः प्रधानाङ्गप्राप्तिरूपाया अनुमितेस्तत्प्रमापकप्रमाणोपस्थापकं भवतीति शेषः । तेन च तत्स्थानमपि दृष्टं साक्षात्प्रवर्तकमनुमितमनुमित्योपस्थितमिति द्वेधा द्विविधं सत्समाख्यातः षष्ठप्रमाणतो बलाधिकं प्रशस्तं प्रबलतरं भवतीति शेषः ।

**अन्वर्थत्वमथो योगबलं चैतद्द्वयं हि सा ।**
**सामाख्या हौत्रमौद्गात्रं लक्ष्यभेदादुदाहृता ॥ २३ ॥**

अन्वर्थत्वमिति । अन्वर्थत्वमर्थानुगतत्वम्, यागाद्यर्थफलानुश्रितत्वमित्यर्थः । अथो तथा च योगबलं योगस्य सम्बन्धरूपस्य बलं प्रवर्तकत्वरूपमेतद् द्वयमुभयं समुदितत्वेन हीति निश्चयार्थकम्, सा, समाख्येति षष्ठं प्रमाणमुच्यते । सा च समाख्या होतृगतत्वेन हौत्रमुद्गातृगतत्वेनौद्गात्रमिति प्रमाणं लक्ष्यभेदात् पृथक् पृथग् लक्ष्यं लक्षणीयमुद्दिश्योदाहृता सोदाहरणमाख्याता तत्र तत्र स्थलेष्विति बोध्यम् ।

**होतृसम्बन्धि यत्कर्म समाख्यायोगतः स्मृतम् ।**
**तत्तदर्थं तथोद्गातृसम्बन्धं यत्तदन्यभाक् ॥ २४ ॥**

होत्रेति । जुहोतीति होता हवनीयकर्मानुष्ठाता तत्सम्बन्धात्क्रियमाणं यत्कर्म यागादिकं समाख्यायोगतोऽन्वर्थत्वयोगबलत्वरूपषष्ठप्रमाणसंसर्गात्तत्तदर्थं तादृशं कर्मत्वावच्छिन्नं हौत्रमित्युच्यते । तथा तद्वदेवोद्गायतीत्युद्गाता सामादि मन्त्रोच्चारकस्तत्सम्बद्धं तद्योगादनुष्ठीयमानं यत्तदौद्गात्रमन्यभागन्यप्रकारकं तदितरविधानप्रयुक्तमाख्यायत इत्युभयोर्भिन्नसम्बन्धाद् भिन्नरूपत्वमूह्यम् ।

**षट्प्रमाणकृतः सर्वः कर्मक्रमविधिः क्रतौ ।**
**प्रयोगाङ्गीकृतः श्रौतः स्वर्गकामः समेधते ॥ २५ ॥**

षडिति । षट्प्रमाणानि पूर्वोक्तानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याख्यानि तैः कृतः सम्पादितस्तत्करणानुष्ठितश्च सर्वो निखिलोऽपि कर्मणां भावनोल्लासितानां क्रियाणां भिन्नभिन्नरूपाणां क्रमेण यथासंख्याश्रयेण यथानुरूपानुष्ठानेन च विधिर्विधानं यजनादीनां क्रतौ यज्ञकर्मणि प्रयोगाङ्गीकृतः प्रयोगानुकूलव्यापारसम्पादितः प्रयोगेषु तत्तदनुष्ठीयमानेषु कर्मसु वाऽङ्गित्वेनाङ्गत्वेन वाऽभिमत इत्याशयः । स च सर्वोऽप्युक्तविधिः स्वर्गकामस्तत्फलकः समेधते सम्यगेधमानः प्रवर्तते नत्वन्यथार्थनिबन्धनेनेति बोध्यम् ।

**श्रुत्यर्थपाठकस्थानमुख्यवृत्त्यङ्कितानि षट् ।**
**प्रमाणानि क्रमेणैव विध्यङ्गानि भवन्त्यपि ॥ २६ ॥**

श्रुतीति । श्रुतिरर्थः पाठ एव पाठकः, स्थानं मुख्यं वृत्तिश्चैतदङ्कितानि संख्यातानि षट्संख्याकानि प्रमाणानि प्रमाकरणरूपाणि क्रमेणैव यथोक्तक्रमानुरोधेन न तु तद्व्यतिरिक्तेन यथा एवकारोऽक्रमत्वनिरासार्थकः, तानीमान्यपि तत्र तत्र यागादिकर्मानुष्ठाने विध्यङ्गानि तदपेक्षया चाप्राधान्येन प्रवृत्तत्वात्तदुपकारकत्वाच्च विधेरङ्गत्वेन प्रयुक्तानि भवन्ति अपिरिति पूर्वोक्तप्रमाणषट्कवदित्यर्थबोधार्थमवधेयम् ।

**श्रुत्यन्तेऽर्थक्रमः पाठक्रमः स्थानक्रमस्ततः ।**
**मुख्यक्रम इतो द्योत्यः प्रवृत्तेश्चरमः क्रमः ॥ २७ ॥**

श्रुतीति । उक्तार्थमेवपुनर्द्रढयन्नाह तेषूक्तेषु षट् प्रमाणेषु श्रुतेः प्राक्क्रमस्तदन्तेऽर्थक्रमः पदवाक्यार्थानुगतः, पाठक्रमो मन्त्रवर्णोच्चारणात्मकः, ततः स्थानक्रमो विधिव्यवकलितः, इतोऽनन्तरं मुख्यक्रमो मुख्यतयोद्दिष्टः प्रधानार्थकश्च, चरमः सर्वान्तिमः प्रवृत्तेः प्रवर्तनायाश्च भावनारूपायाः क्रमः प्रत्येयः ।

**सप्रयोजनमुद्दिष्टः समग्रोऽपि क्रमोच्चयः ।**
**विध्यर्थो देवताद्रव्यविनियोगाय योजितः ॥ २८ ॥**

सप्रयोजनमिति । प्रयोजनं फलं प्रधानं स्वर्गादि तदवान्तरञ्चानेकविधम्, तेन समं यथा स्यात्तथेति क्रियाविशेषणम् । समग्रोऽपि यथानिर्दिष्टः क्रमोच्चयः श्रुत्यादीनां प्रमाणानां यथासंख्यक्रमसमूहो विध्यर्थः क्रियार्थकस्तत्तद्विधानसम्पादनार्थकश्च देवताद्रव्यविनियोगाय क्वचिद् देवतोद्देश्यको विनियोगः, क्वचिद् द्रव्योद्देश्यकः क्वचिच्चान्योद्देश्यको योजितः सम्प्रयुक्तः यजनानुगतो योज्यमानो भवतीति सर्वेषां प्रमाणानां विध्यर्थकत्वेनैव सार्थक्यादिति भावः ।

**तत्राङ्गानामसंख्यानामसंख्येयं फलं पृथक् ।**
**निर्दिष्टमिष्टलाभाय तदङ्गिन्येव लीयते ॥ २९ ॥**

तथेति । तत्र विध्यर्थोदिष्टक्रमोच्चयोचितदेवद्रव्यादिविनियोगविधानेऽसंख्यानां संख्याधिकानां नैकविधकल्पितमसंख्येयमनेकसंख्याकं फलं प्रयोजनं तत्तत्कर्मानुविद्धं प्रकरणाद्यनुगतं पृथक् तत्तत्क्रतुक्रियाभिन्नमिष्टलाभाय स्वाभीष्टकामायानेकफलावाप्तये च सदपि तदखिलं सम्भूय तदङ्गिन्येव तत्तदवान्तरकल्पितानेकफलं तस्मिन्नेवाङ्गिनि प्रधानफले स्वर्गाख्ये लीयते पर्यवस्यति पार्यन्तिक्–पर्यवसानमभ्युपगच्छतीति भावः ।

**स्वतः प्रामाण्यमेतेषां परतश्चाप्रमाणता ।**
**तेन नास्ति परः कश्चिच्छ्रुतेः कर्तेश्वरो मतः ।। ३० ।।**

स्वत इति । स्वतः स्वत्वेन स्वेतरनैरपेक्ष्येण स्वपर्याप्त्येत्यर्थः । एतेषां श्रुत्यादीनां षट्प्रमाणानां प्रमाण्यं सिद्धं भवति, परतश्च स्वेतरापेक्षयाऽप्रमाणाता पारदौर्बल्यमन्यतस्तदुपक्षीणत्वमिष्यते । तेन हेतुना स्वतः प्रामाण्यकारणेन श्रुतेर्जाताविकवचनत्वाङ्गीकारेण श्रुतिसमुदायस्य तच्छब्दराशेश्च कर्ता कारक उद्भावक उत्सर्जको वा कश्चित्तदितरः परोऽन्य ईश्वरो नास्ति, तथात्वे परत्वप्रामाण्यापत्तिः स्याच्छ्रुतेरिति तात्पर्यं बोध्यम् ।

**कालादिकृतवैगुण्ये प्रायश्चित्तमदेयता ।**
**लौकिकाग्निहुतिः शेषोऽतिदेशश्चोह उम्भितः ।। ३१ ।।**

कालादीति । कलनात् कालो दृष्टादृष्टाद्यनन्तरूपः, आदिना देशावस्थादिसामान्यविशेषग्रहः, तत्कृते तज्जाते तत्प्रयुक्ते च वैगुण्ये वैसादृश्येनानौचित्ये विधिविपर्यये वा जाते सति प्रायश्चित्तं तदपनोदनार्थमनुष्ठानविशेषो व्रतोपवासाद्याचरणम्, तच्चादेयता प्रतीपं दातुमनुष्ठातुं वाऽर्हताभावः, लौकिकाग्निहुतिरग्निहोत्रादिलौकिकहोत्राद्यनुष्ठानम्, शेषः शिष्यमाणाकारः कर्मविशेषोऽतिदेशोऽतिदिश्यमानो मन्त्रादेः क्रियार्थकः, ऊह उह्यमानाकारतया विधीयमानः मन्त्रसामादीनां क्रतोः साधनीभूतश्च, इत्यादि सर्वोऽपि व्यापारसमुच्चयस्तत्र तत्रोम्भितः कल्पितः कर्मनिष्पादनार्थमिति संक्षेपतो बोध्यम्; विस्तरश्चाकरे द्रष्टव्यः ।

**देवतालिङ्गसंख्यादिवाचकेषु पदेष्वपि ।**
**तत्तदर्थानुरोधेन परिवर्तनमूहतः ।। ३२ ।।**

देवतेति । दिव्यतीति होमाद्याहुतिभुग्देवतेन्द्राग्न्यादिः, लिङ्गमर्थगमकं संख्यैकत्वद्वित्वादिरूपाऽऽदिपदेन तत्तत्प्रकरणादिप्राप्तानां ग्रहणम्, इत्यादिवाचकेष्वभिधायकेषूपस्थापकेषु पदेषु वाचकत्वावच्छिन्नेषु, अपिना मन्त्रसामाद्यतिरिक्तैतद्ग्रहणं बोध्यम् तत्तदर्थानुरोधेन देवतालिङ्गसंख्याद्यर्थानुसारेण क्वचिद् देवतार्थवशात् क्वचिल्लिङ्गार्थहेतोः क्वचिच्च संख्याद्यर्थानुगमनाच्च, ऊहत उह्यमानविधानतः परिवर्तनं परिवृत्तिरन्यथोपस्थितिरन्यस्थाने तदन्यप्राप्तिश्चेत्यर्थः, भवतीति शेषः । सत्स्वपि तत्तद्देवताद्यर्थवाचकेषु पदेषूहोऽर्थानुरोधात्तत्र तत्र परिवृत्तिहेतुको भवतीति भावः ।

**साममन्त्राङ्गलिङ्गादिभेदादूहोऽप्यनेकधा ।**
**उह्यमानश्रुताकारोऽनुमानान्तर्निवेशितः ॥ ३३ ॥**

सामेति। साम उद्गीयमानश्रौतसमुच्चयविशेषः, मन्त्रो मन्त्रणात्मको मननात्मको वर्णपदवाक्यात्मकः, लिङ्गं गूढार्थबोधकम्, आदिपदैन वाक्यप्रकरण-स्थानादीनां प्रमाणान्तराणां ग्रहणम्, तद्भेदाद् विशेषाल्लक्षणार्थादिकृतादूहोऽप्यनेकधा नैकविधः सामोहो मन्त्रोहो लिङ्गोह इत्यादिरूपो नानाप्रकारकः कल्पितः। स चोह उह्यमानः कल्प्यमानः श्रुताकारः श्रौतस्तत्प्रयुक्तत्वादनुमानान्तर्निवेशितोऽनुमान-मात्रशरीरनिष्पन्नस्तन्निविष्टत्वादनुमित्याकारतया हेतुहेतुमद्भावानुविद्धतया च श्रौतोह आनुमानिकोह इति द्वैविध्यमाप्नोतीति भावः।

**एभिरन्यैश्च लोपादिहेतुबाधादिगर्भितैः ।**
**विषयैर्धर्मतत्त्वार्थनिर्णयो जैमिनेर्नये ॥ ३४ ॥**

एभिरिति। एभिर्यथापूर्वोक्तैः श्रुत्यादिप्रमाणैरन्यैः प्रयोगैर्विनियोगैर्विधीयमान-साधनैश्चेत्यर्थः, लोपोऽपसारणमदर्शनमगोचरतेत्यादौ येषां तादृशा हेतवस्तत्र तत्र कारणतयाऽन्विताः, बाधः प्रतिबन्धकः प्रतिबन्धितस्वभावस्तदादिगर्भितैस्तदन्त-र्निष्ठैः सद्भिर्विषयैः प्रतिपाद्यैः पदार्थैरित्यर्थः, जैमिनेर्मीमासासूत्रकृन्महर्षेर्नये सिद्धान्ते श्रौतदर्शनाध्वनि धर्मतत्त्वार्थनिर्णयो हि—'अथातो धर्मजिज्ञासेति' धर्मजिज्ञासूनां कृते तत्तत्त्वस्यार्थतः सप्रयोजनप्रतिपाद्यविषयविवेको भवतीति शेषः। ऋते महर्षिजैमिनेर्नयोक्तविषयविमर्शाद् धर्मतत्त्वार्थनिर्णयस्यासम्भवनीयतेति तात्पर्यमव-धार्यम्।

**संक्षिप्य गदितं गूढं श्रौतसारार्थदर्शनम् ।**
**धर्मशास्त्रविदामेकं मीमांसा शरणं परम् ॥ ३५ ॥**

संक्षिप्येति। संक्षिप्य यथामति संकोचेन संकलय्य गूढं तत्त्वनिचयैर्दुर्गम्यं श्रौतसारार्थदर्शनं श्रुतिसम्भूतपरमार्थसाधनं शास्त्रं गदितं संक्षिप्तकारिकावृत्ति-ग्रन्थेन मयेति शेषः। धर्मशास्त्रविदां विदुषां तद्विविदिषूणामुभयेषां कृते मीमांसा 'पूजितविचारशास्त्रम्' परं शरणमेकमात्रमाश्रयणमनन्यसाधारणमास्पदमित्यलं विस्तरेण।

□

# शुद्धिपत्रम्

| अशु० | शु० | पृष्ठसं० |
|---|---|---|
| विभावं | विभावै | २ |
| पूर्बकं | पूर्वकं | ३ |
| भावनंव | भावनैव | ,, |
| उपचारितभेदः | उपचरितभेदः | ४ |
| परिछिन्नशरीरस्य | परिच्छिन्नशरीरस्य | ,, |
| किमित्याकाँन्छायां | किमित्याकाँक्षायाम् | ५ |
| सर्वैषां | सर्वेषां | ६ |
| पुरा | पुरो | ९ |
| रस | रसः | ११ |
| बा | वा | १२ |
| प्राक्तनेदानीन्तवासनोद्गमेन | प्राक्तनेदानीन्तनवासनोद्गमेन | १३ |
| रसोऽय | रसोऽयं | १४ |
| युञ्चान | युञ्जान | १५ |
| सवासनान | सवासनानां | ,, |
| भायं | भाव्यं | १७ |
| सस्कारः | संस्कारः | २१ |
| रसबाधनैपुणी | रसबोधनैपुणी | २१ |
| लक्षणमित्याकरको | लक्षणमित्याकारको | २२ |
| परात्पतरस्य | परात्परतरस्य | २५ |
| धर्मिणश्चेवं | धर्मिणश्चैवं | ११ |
| भाव्थमानरूपा | भाव्यमानरूपा | ३४ |
| पूर्वोक्तार्थ | पूर्वोक्तार्थं | ,, |
| नामोपाधितया | नानोपाधितया | ३५ |
| कायानुगुण्यभाजः | काव्यानुगुण्यभाजः | ३६ |
| गुणप्रभावेन | गुणप्रभावेण | ३७ |
| प्रशस्तिमधिगथ्छति | प्रशस्तिमधिगच्छति | ४१ |
| बोधेनानयाः | बोधेनानयोः | ४४ |
| निरसपुरःसरमिति | निरसनपुरस्सरमिति | ४६ |
| पूणता | पूर्णता | ४७ |

| अशु० | शु० | पृष्ठसं० |
|---|---|---|
| तल्लक्षण | तल्लक्षणं | ४८ |
| व्यञ्जकत्वाश्रयेणेतत् | व्यञ्जकत्वाश्रयेणैतत् | ५२ |
| वेदादिष्वेवोपपुज्यते | वेदादिष्वेवोपयुज्यते | ५७ |
| नाभ्पुपेयते | नाभ्युपेयते | ,, |
| समभ्युदित | समभ्युदितः | ५९ |
| प्रतिपद्यते | प्रतिपद्यन्ते | ५९ |
| भवषि | भवति | ६० |
| पात्ररवास्तविकैरपि | पात्रैरवास्तविकैरपि | ६१ |
| वृत्तिविरोधे | वृत्तिनिरोधे | ६३ |
| चित्तस्यैकाग्रतां | चित्तस्यैकाग्रतां | ,, |
| विश्रान्तैः | विश्रान्तेः | ६४ |
| विरोधोन्मुखीभावश्च | निरोधोन्मुखीभावश्च | ,, |
| योगशास्शे | योगशास्त्रे | ६६ |
| भावनाविशेषणं | भावनाविशेषेण | ,, |
| दुःखमात्र | दुःखमात्रे | ७० |
| बुद्धिग्राह्यमतीन्द्रिय | बुद्धिग्राह्यमतीन्द्रियम् | ,, |
| मोक्षलणायाः | मोक्षलक्षणायाः | ७४ |
| तद्भोक्तृतया | तदभोक्तृतया | ७५ |
| कथं भोक्तृत्वं | कथमभोक्तृत्वं | ,, |
| तद्भाव | तदभाव | ७६ |
| कतव्यतयोपास्यः | कर्तव्यतयोपास्यः | ८२ |
| उपोद्धातेति | उपोद्घातेति | ,, |
| द्वविध्यं | द्वैविध्यं | ८६ |
| यथा | पथा | ८८ |